## सोमेश्वर

पृ.

४६ (9) शृङ्गारः । साधारणीभावना च विभा वादिभिः ।

४८ (10) अत्रौत्सुक्याद्व्यभिचारिणोऽनुगतत्वेन 'दूराद्', इत्यादिपदार्पितः सहसाप्रसरणादिरूपोऽनुभावः 'प्रेयसि' इति विभावश्च प्रकाशते ।

४८-४९ (11) सकलजातिसुलभत्वेन हृद्यतया च पूर्वं शृङ्गारस्तदनुगामी च ततो हास्यस्तद्विपरीतः करुणः । ततस्तन्निमित्तमर्थप्रधानो रौद्रः । कामार्थयोर्धर्ममूलत्वाद् धर्मप्रधानो वीरः । तस्य भीताभयदानसारत्वात् ततो भयानकः । तद्विभावसाधारण्यसंभावनात् ततो वीभत्स इतीयद् वीरेणाक्षिप्तम् । वीरस्यान्तेऽद्भुतः फलमिति ततोऽद्भुतः ।

५९ (12) अन्ये, तु 'अर्थसामर्थ्येन सादृश्यात्मकेन द्वितीयाऽभिधैव प्रतिप्रस्तूयते, ततश्च द्वितीयोऽर्थोऽभिधीयत एव, न ध्वन्यते । तदनन्तरं तु तस्य द्वितीयस्यार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा सा तावद् भात्येव । न चान्यतः ॥ शब्दादिति सा ध्वननव्यापारात् । तत्राभिधाशक्तेः कस्याश्चिदप्यनाशङ्कनीयत्वादिति प्रकृताप्रकृतयोर्वाक्यार्थयोः साम्यं ध्वन्यत इत्यलंकारध्वनिरित्याह—

६६ (13) काव्यविशेषो हि विशिष्टार्थप्रतिपत्तिहेतुः संदर्भविशेषः, काव्यविशेषत्वं च न पदप्रकाशत्वे उपपद्यते, पदानां स्मारकत्वेनावाचकत्वाद्, —— ।

(14) यथा श्रुतिदुष्टानां पेलवादिपदा-

## माणिक्यचन्द्र

पृ.

८१-८२ (9) णीभूता संतानवृत्तेरेकस्या एव वा संविदो गोचरीभूता रतिः शृङ्गारः साधारणीभावनादिभिरिति ।

८३-८४ (10) अत्रौत्सुक्यादिव्यभिचार्यनुगतत्वेन दूरादित्यादिपदेभ्यः सहसा प्रसारणादिरूपोऽनुभावः, प्रेयसीति पदाच्च विभावो लभ्यते ।

८४-८५ (11) अत्र कामस्य सकलजातिसुलभतया अत्यन्तपरिचितत्वेन सर्वान् प्रति हृद्यतेति पूर्वं शृङ्गारः, तदनुगामित्वाद् हास्यः, तद्वैपरीत्यान्निरपेक्षभावाच्च ततः करुणः, ततस्तत्कारणमर्थसारो रौद्रः, ततो रौद्रस्य कामार्थप्राधान्येन कामार्थयोश्च धर्ममूलत्वादिति धर्मप्रधानो वीरः, तस्य भीतत्राणसारत्वात्ततो भयानकः, ततस्तद्विभावसाध्यसम्भावनाद्बीभत्सः, इतीयद्वीरेणाक्षिप्तं वीरस्य फलभूतोऽद्भुतः ।

१०८ (12) अयं भावः—सादृश्यरूपेणार्थसामर्थ्येन द्वितीयाभिधैव प्रतिप्रसूयते । ततश्च द्वितीयोऽर्थ उच्यत एव न ध्वन्यते । तदनन्तरं तु तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्रकृतेन साकं या रूपणा सा तावद्विभात्येव । न चान्यतः सा शब्दादिति ध्वननव्यापारात्तत्राभिधाशक्तेः कस्याश्चिदनाशङ्क्यत्वादिति प्रकृताप्रकृतवाक्यार्थयोः साम्यं देवो देव एवेति रूपं ध्वन्यते ।

१२१ (13) काव्यविशेषो विशिष्टार्थप्रतीतिहेतुः सन्दर्भविशेषः, काव्यविशेषता च न पदप्रकाश्यत्वे घटेत, पदानां स्मृतिहेतुत्वेनावाचकत्वादिति—— ।

(14) यथा (श्रुति)दुष्टपेलवादिपदाना-

| सोमेश्वर | माणिक्यचन्द्र |
|---|---|
| पृ. | पृ. |
| ६६ (14) नामसभ्यार्थं प्रति न वाचकत्वं, तद्वशाच्च आचाररूपं काव्यं श्रुतिदुष्टम्। तच्च श्रुतिदुष्टत्वमन्वयव्यतिरेकाभ्यां भागेषु व्यवस्थाप्यते, तथा प्रकृतेऽपि पदानां व्यञ्जकत्वमुखेन ध्वनिव्यवहारः॥ न च ध्वनिव्यवहारे वाचकत्वं प्रयोजकं, व्यञ्जकत्वेन तस्य व्यवस्थानात्॥ | १२१ (14) मसभ्यार्थं प्रति न वाचकत्वं किन्तु स्मारकत्वं, तद्वशाच्च चारुरूपं काव्यं (श्रुति)दुष्टमन्वयव्यतिरेकाभ्यां भागेषु व्यवस्थाप्यते, तथा प्रकृतेऽपि पदानां व्यञ्जकत्वमुखेन ध्वनिव्यवहारः। न च ध्वनिव्यवहारे वाचकत्वं प्रयोजकं, व्यञ्जकत्वेन व्यवस्थानादिति ..। |
| ७३ (15) प्रवन्धप्रतिपाद्येन ह्यर्थेन गृध्रगोमाय्वोर्भक्षणाभिप्रायो व्यज्यते। स चाभिप्रायः शान्तरसनिष्ठ एव। | १३३ (15) भारतोक्तगृध्रगोमायुसंवादनामप्रवन्धप्रतिपाद्येनार्थेन गृध्रगोमाय्वोर्भक्षणाभिप्रायो व्यज्यते । स चाभिप्रायः शान्तरसनिष्ठः । |
| ७४ (16) पदत्रयमेव यावन्न याति तावद् धृत इति प्रेमातिशयो ध्वन्यते। | १३५ (16) यावत्पदत्रयमपि न याति तावत् धृत इति स्नेहातिशयो व्यङ्ग्यः। |
| ७५ (17) सर्वत्र सुवादीनामभिप्रायविशेषाभिव्यञ्जकत्वम्। स तु अभिव्यक्तोऽभिप्रायो यथास्वं विभावादिरूपताद्वारेण रसादीन् व्यनक्ति॥ | १३६ (17) सर्वत्र सुवादीनामाकूतविशेषव्यञ्जकत्वम् । स त्वाकूतो व्यक्तः सन् यथायोगं विभावादिरूपताद्वारेण रसादिकं व्यनक्ति। |
| ८१ (18) एवमुद्दीपनविभावोद्बोधितविप्रलंभः परस्पराधिष्ठानत्वाद् रतेर्विभावानां साधारण्यमभिमन्यमान इत एव प्रभृति हृदये प्रियां निधायैव स्वात्मवृत्तान्तं तावदाह। | १४४-१४५ (18) एवमुद्दीपनविभावबोधितविप्रलम्भोऽन्योन्याश्रयत्वाद्रतेर्विभावानां साम्यं मत्वा इत एव प्रभृति प्रियां हृदि न्यस्यैव स्वं वृत्तान्तं रामस्तावदाह...। |
| ८२ (19) रामशब्दार्थध्वनिविशेषावकाशदानाय कठोरहृदय-पदम्। यथा 'तद् गेहम्' इत्युक्तेऽपि 'नतभित्ति' इति। अन्यथा राम-पदं दशरथकुलोद्भवत्वकौशल्यास्नेहपात्रत्ववाल्यचरितादिधर्मान्तरपरिणतमर्थं कथं न ध्वनेत्। 'अस्मि' इति स एवाहं भवामीत्यर्थः। | १४५ (19) रामशब्दार्थव्यङ्ग्यविशेषावकाशदानाय कठोरहृदयपदम् । अन्यथा रामपदं दशरथकुलोत्पत्तिकौसल्यास्नेहपात्रत्वबाल्यचरित्रताटकावधादिधर्मान्तरपरिणमितमर्थं कथं नु ध्वनयेत्। अस्मि स एवाहं भवामीति। |

# उल्लास ५

## सोमेश्वर

पृ.

८८ (1) 'पश्यताम्' इत्यनादरे षष्ठी। पश्यतः प्रियाननादृत्येत्यर्थः। भावस्येति। शत्रुस्त्रीणां रत्यभावे सैनिकानामनौचित्यप्रवृत्तत्वाद् रसाभासः। शत्रूणां चानुचितं दैन्यादीति द्वितीयेऽर्धे भावाभासः, तौ च राजविषयस्य रतिभावस्याङ्गम्। अत्र अलंकार ऊर्जस्वि।

८७ (2) 'पश्येत कश्चिद्' इत्याशङ्का। 'चपल रे चल गच्छ' इत्यसूया। 'का त्वरा' इति धृतिः। 'अहं कुमारी' इति स्मृतिः। 'हस्तालम्बं वितर' इत्यौत्सुक्यम्। 'हह' इति श्रमः। 'ह' इति दैन्यम्। 'व्युत्क्रमः' इति विबोधः। 'क्वासि यासि' इत्यौत्सुक्यम्। एषां पूर्वपूर्वोपमर्देनोपनिबन्धः। शबलता-राजविषयरतेरङ्गम्।

९१ (3) न चात्र विपरीतलक्षणा, यत् उच्चारणकाल एव न कोपादिति दीप्ततारगद्गदसाकाङ्क्षकाकुबलाद् निषेध्यमानतयैव युधिष्ठिराभिमतसंधिमार्गाक्षमारूपत्वाभिप्रायेण प्रतीतिरिति मुख्यार्थबाधाद्यभावात्॥

(4) तथा हि गृहकर्मव्यापृताया इत्यन्यपराया अपि वध्वा इति सातिशयलज्जापारतन्त्र्यबद्धाया अपि। अङ्गानीति। एकमपि न तादृग् अङ्गं यद् गाम्भीर्यावहित्थवशेन संवरीतुं पारितम्॥ सीदन्तीति। आस्तां गृहकर्मसंपादनं, स्वात्मानमपि धर्तुं न प्रभवन्ति गृहकर्मयोगे च स्फुटं तथा अलक्ष्यमाणानीति। अस्माद् वाच्यादेव स्मरपारवश्यप्रतीतेश्चमत्कार इत्यर्थः॥

९४ (5) मात्रग्रहणेनैतदाह 'यथा विधिनिषे-

## माणिक्यचन्द्र

पृ.

१५२ (1) अत्र पश्यतामित्यनादरे षष्ठी, पश्यतः प्रियाननादृत्येत्यर्थः। भावस्येति। रिपुस्त्रीणां रत्यभावे सैनिकानां हठात् प्रवृत्त्या रसाभासः शत्रूणां च रत्यभावे दैन्याद्यनुचितमित्युत्तरार्धे भावाभासः। तौ च राजविषयरतेङ्गम्। अत्रोर्जस्व्यलङ्कारः।

१५३ (2) पश्येत्कश्चिदित्याशङ्का। चञ्चल चल गच्छेत्यसूया। का त्वरेति धृतिः कुमार्यस्मीति स्मृतिः। हस्तालम्बं वितरेत्यौत्सुक्यम्। हहेति श्रमः। हेति दैन्यम्। व्युत्क्रम इति बाधः। क्वासि यासीत्यौत्सुक्यम्। एषां पूर्वपूर्वोपमर्देन बन्धः शबलता नृपविषयरतेरङ्गम्।

१५९ (3) न चात्र विपरीतलक्षणा, यत उच्चारणकाल एव न कोपादिति दीप्ततारगद्गदसाकाङ्क्षकाकुबलान्निषेधस्य निषेध्यमानतयैव युधिष्ठिरेष्टसन्धेरक्षमणरूपत्वाभिप्रायेण प्रतीतिरिति मुख्यार्थबाधाद्यभावात्।

१५९-६० (4) गृहकर्मव्यापृतायाः अन्यकर्मरताया अपि। वध्वाः सातिशयलज्जापरवशाया अपि। अङ्गानीति बहुवचनेनैकमपि न तादृशमङ्गं यदात्मानं संवरीतुं शक्नोति। सीदन्ति आस्तां गृहकर्म, स्वमपि नालं धर्तुं, गृहकर्मयोगे च तथा स्फुटमलक्ष्यमाणानीत्यस्माद्वाच्यादेव स्मरपारवश्यप्रतीतेश्चमत्कारः।

१६२-१६३ (5) मात्रशब्दादेतदुच्यते यद्वि-

## सोमेश्वर

पृ.

९४ (5) धतदुभयात्मतारूपेण वस्तुध्वनिः संक्षेपेण सुवचस्तथा न अलंकारध्वनिरलंकाराणां भूयस्त्वात् ॥

९६ (6) साक्षाच्छक्तिविषयत्वेन हि व्यापाराद् अर्थापत्तेः कारणता पूर्वयोस्त्विनिकर्तव्यतारूपतेत्यभिप्रायः ॥

(7) पदानां संकेतो गृह्यत इति योगः ॥ प्रवृत्ति [निवृत्ति] कारीति । वृद्धव्यवहाराच्छब्दार्थसंबन्धावसायः । स च वृद्धव्यवहारः प्रवृत्तिनिवृत्तिरूपः । प्रवृत्तिनिवृत्ती च विशिष्टार्थनिष्ठे, अतो विशिष्ट एवार्थे पदानां संबन्धावसायः ॥

९७ (8) विशिष्टा एवेति । अन्वितानां विशिष्टानामेव पदार्थानामभिधेयत्वम् । वाक्यार्थो हि क्रियाकारकसंसर्गरूपः । कारकाणां च क्रियासंबन्धोन्मुखतया क्रियाणामपि कारकविरहासहिष्णुत्वेन अन्वितानामेव स्वशब्दैरभिधानं भवतीत्यर्थः ॥ न तु पदार्थानामिति । सामान्यभूतत्वेन अभिहितानां पदार्थानां पश्चान्न वैशिष्ट्यमित्यर्थः ॥ यद्यपीति । संकेतगोचर इति योगः ।

(9) यानि वाक्यान्तरे दृष्टप्रयोगाणि ॥ व्यतिषिक्तानामिति । वाक्यस्यैव प्रयोगार्हत्वात् पदार्थान्तरैरन्वितानाम् । तथाभूतत्वादिति । सामान्यावच्छादितविशेषरूपत्वात् ॥ सामान्यविशेषरूप इति । सामान्यानि अन्तःकृताशेषविशेषाणि भवन्तीति तत्प्रतीतिनान्तरीयकतयैव विशेषसद्भावः । यदाहुः– निर्विशेषं न सामान्यं भवेच्छशविषाणवत् ॥ ततः सामान्यावच्छादितो विशेष एव संकेतस्य विषयः । तत-

## माणिक्यचन्द्र

पृ.

१६३ (5) धिनिषेधतदुभयात्मतारूपेण वस्तुनो ध्वनिः संक्षिप्तः, न त्वलङ्काराणां, बहुत्वात् ।

१६५ (6) साक्षाच्छक्तिविषयतया हि व्यापारादर्थापत्तेः कारणता, पूर्वयोस्त्विनिकर्तव्यतारूपतेति भावः ।

१६६ (7) पदानां सङ्केतो गृह्यत इति योगः । निवृत्तिकारीति । प्रवृत्तिनिवृत्तिरूपो वृद्धव्यवहारः, प्रवृत्तिनिवृत्ती च विशिष्टार्थनिष्ठे, अतो विशिष्ट एवार्थे पदानां सम्बन्धावगतिः ।

(8) विशिष्टा एवेति । विशिष्टा एवान्विताः पदार्थाः पदानामभिधेयाः, न तु पदार्था एव केवलाः । अयमाशयः— वाक्यार्थस्तावत् क्रियाकारकयोगात्मा । कारकक्रियाश्च सम्बन्धाभिमुख्येन मिथो विरहासहिष्णुत्वेनान्विता एव स्वशब्दैरुच्यन्त इत्यर्थः । न त्विति । सामान्यत्वेनोक्तानां पदार्थानां पश्चाद्वैशिष्ट्यं स्यादिति । यद्यपीति । सङ्केतगोचर इति योगः ।

१६७-१६८ (9) यानि वाक्यान्तरे प्रयुक्तदृष्टानि । सामान्यावच्छादित इति । न्यग्भूतसामान्यः । असाविति । पदार्थः । व्यतिषक्तानामिति । 'वाक्यमेव प्रयोगार्हम्' इति न्यायात् पदार्थान्तरैर्युक्तानाम् । तथाभूतत्वादिति । सामान्यावच्छादितविशेषरूपत्वात् । विशेषरूप इति । सामान्यप्रतीतिनान्तरीयका विशेषाः, 'निर्विशेषं न सामान्यं भवेच्छशविषाणवत्' इति न्यायात् ।

## सोमेश्वर

पृ.

९७ (9) श्च सामान्यभूतः पदार्थोऽसमितत्वाद् अनभिधेय इत्याह अतिविशेषभूत इति । विशेषमतिक्रान्तोऽतिविशेषः, त भूतः प्राप्तोऽतिविशेषभूतः सामान्यः पदार्थः । यत्र तु सामान्यरूपोऽपि पदार्थो न वाच्यस्तत्र कैव कथा व्यङ्ग्यस्य विध्यादेरर्थान्तरस्य वाच्यतायाम् ॥

९८ (10) वाक्यार्थस्तु अपदार्थ एवेति योगः । कीदृशो वाक्यार्थोऽन्वितविशेषः । अन्वितविशेषो यत्र स तथा, समग्राङ्गसंपूर्ण इत्यर्थः । यतोऽवाच्यस्ततः पक्षद्वयेऽप्यपदार्थ एव वाक्यार्थः ॥

(11) यद्यपीति । अन्विताभिधानवादिभिरेव प्राभाकरैः ॥ नैमित्तिकार्थेति । वाक्यार्थतात्पर्यानुसारेण निमित्तानि पदार्थाः कल्प्यन्ते, ततो नैमित्तिक एवायं न व्यङ्ग्य इति भावस्तेषाम् ॥ अन्वितमात्र इति, सामान्यावच्छादितविशेषरूपे । एवं चेति । निमित्तेषु संकेत इति, नैमित्तिकेऽर्थे संकेताकरणात् कथं तस्य साक्षात्प्रतिपत्तिः, तस्मिंश्चाप्रतिपन्ने कथं पदार्थावगमानां नियतनिमित्तभावः ।

(12) यथा 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचति' इत्यादौ ओदनपाकश्चेदन्यतः सिद्धस्तदा स्थाल्यधिकरणत्वमात्रं विधेयं, तस्यैव साध्यत्वात् ॥

## माणिक्यचन्द्र

पृ.

१६७-१६८ (9) ततः सामान्यावच्छादितो विशेष एव सङ्केतस्य विषयभूतः, सामान्यं त्वनुक्तमपि ज्ञायत इत्याह-अतीति । विशेषमतिक्रान्तो यः स्वभावः सोऽतिविशेषः तं भूतः प्राप्तोऽतिविशेषभूतः सामान्योऽर्थः । केवलपदार्थरूप इति यावत् । यदि वा विशेषमतिक्रान्तः अतिविशेष, स चासौ भूतश्च स तथा सामान्योऽर्थः । यत्रेति । वाक्ये । यदाऽन्विताभिधानवादे सामान्योऽप्यर्थो न वाच्यस्तदा का वार्ता व्यङ्ग्यस्य वाच्यतायाम् ।

१६८ (10) वाक्यार्थस्त्वपदार्थ एवेति योगः । अन्वितविशेषः- सर्वाङ्गसम्पूर्णः केवलविशेषरूपः । एतत् वाक्यार्थविशेषणम्, इति पक्षद्वयेऽप्यपदार्थ एव वाक्यार्थः ।

१६८-१६९ (11) यद्यपीति । अन्विताभिधानवादिभिः प्राभाकरैः । नैमित्तिकार्थेति । वाक्यार्थतात्पर्यनैमित्तिकोऽर्थः । निमित्तानीति । प्रस्तावाच्छब्दाः, ततस्तात्पर्यानुसारेण यदा शब्दाः कल्प्यन्ते तदा व्यङ्ग्यं वाच्यमेवेति भावस्तेषाम् । अन्वितमात्र इति । सामान्यावच्छादितविशेषरूपे ॥ निश्चितमिति । निमित्तेषु सङ्केतो न नैमित्तिकेऽर्थे, तत्कथं नैमित्तिकस्य साक्षात्प्रतीतिः, तदप्रतीतौ कथं पदार्थावगतिर्नियतनिमित्ता स्यादिति ।

१६९ (12) यथा चैत्रः काष्ठैः स्थाल्यामन्नं पचतीत्यादावन्नपाकश्चेदन्यतस्सिद्धः, तदा स्थाल्याधारत्वमेव विधेयम्, तस्यैव साध्यत्वात् ।

## सोमेश्वर

पृ.

९९ (13) उक्तस्यैव शब्दस्य संबन्धिन्यर्थेऽभिधेये तात्पर्यं न तु निमित्तान्तरेण प्रतीतमात्रे व्यङ्ग्येऽप्यर्थे तात्पर्यावकाशः ।

१०० (14) यस्य ह्यभिधेयेनार्थेन सह नैकट्यं, स बलीयान् । यस्य च व्यवहितत्वं स दुर्बलः । यदाहुः— 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पददौर्बल्यमर्थविप्रकर्षात् ।' न च व्यवहितत्वमव्यवहितत्वं वाभिधाव्यापारगम्यं, किं तु निमित्तत्ववैविध्याद् व्यङ्ग्यमेव तच्च यदि नाभ्युपगम्यते तत् कथमेकस्य बलीयस्त्वं, सर्वेषां श्रुत्यादीनामभिधाव्यापारस्य समानत्वात् प्रधाने चाङ्गत्वापादनं श्रुत्यादीनामर्थः। श्रवणं श्रुतिः । यदर्थस्याभिधानं शब्दश्रवणमात्रादेवावगम्यते ।

१००-१०१ (15) 'बर्हिर्देवसदनं दामि' इति। देवाश्रयदर्भच्छेदनेऽयं मन्त्र इति। 'दामि' इति लवनलिङ्गाद् अनेन मन्त्रेण बर्हींषि लुनीयादिति प्रतीयते॥ वाक्यतो यथा-'श्वेतं छागमालभेत ।' अत्रैकवाक्योपादानाच्छ्वेतगुणस्य च्छागावच्छेदकत्वेन क्रियाङ्गभावो गम्यते। यथा वा 'अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्यत्र अरुणादीनां क्रमेण संबन्धः श्रौतः । अरुणैकहायन्यादीनां परस्परं पुनर्वाक्यीयम्॥ दर्शपौर्णमासप्रकरणे 'समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजति' इति पञ्च प्रयाजा उक्ताः, ते च दर्शपौर्णमासयो-

## माणिक्यचन्द्र

पृ.

१७० (13) उपात्तस्यैव शब्दस्य सम्बन्धिन्यर्थेऽभिधेये तात्पर्यं, न तु हेत्वन्तरेण ज्ञातमात्रे व्यङ्ग्येप्यर्थे तात्पर्यप्रसङ्गः ।

१७२-१७३ (14) यस्याभिधेयेनार्थेन सह नैकट्यं स बलीयान्। यस्य च व्यवहितत्वं स दुर्बलः। व्यवहिताव्यवहितत्वे च नाभिधागम्ये, किन्तु व्यङ्ग्ये। एतच्च त्वया नेष्यते । तत्कथमेकस्य बलीयस्त्वं, श्रुत्यादीनामभिधाव्यापारस्य समानत्वात्। प्रकृतिप्रत्ययश्रुत्योः स्वार्थाभिधायकत्वेन पदस्य कारकविभक्तीनां च विनियोजकत्वेन लिङ्गादीनां विधिसामर्थ्येन वेति क्रमेणाभिधात्रीविनियोक्त्रीविधात्रीसंसंज्ञाः तिस्रः श्रुतयः । यदर्थस्याभिधानं शब्दश्रवणमात्रादेवावगम्यते सा श्रुतिः ।

१७३-१७४ (15) 'बर्हिर्देवसदनं दामि' अत्र दामीति लवनलिङ्गादेवाश्रयो दर्भोऽनेन मन्त्रेणोत्पाद्य इति प्रतीयते। 'श्वेतं छागमालभते' अत्रैकवाक्योपादानात् श्वेतगुणस्य छागावच्छेदकत्वेन क्रियाङ्गभावो गम्यते। यथा वा— अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्यत्र अरुणादीनां क्रयेण सम्बन्धः श्रौतः, अरुणैकहायन्यादीनां मिथः पुनर्वाक्यीयः । दर्शपूर्णमासप्रकरणे, 'समिधो यजति' 'तनूनपातं यजति' 'इडो यजति' 'बर्हिर्यजति', 'स्वाहाकारं यजति' इति पञ्च प्रयाजा उक्ताः। ते च दर्शपूर्णमासयोरेव क्रियन्ते, तदङ्गत्वमवगम्यत इत्यर्थः । 'अग्नेरहं देवयज्यया-

## सोमेश्वर

पृ.

१००-१०१ (15) रेव क्रियन्ते। तदङ्गत्वमवगम्यत इत्यर्थः ॥ 'अग्निरन्नस्यान्नपतिस्तस्याहं देवयज्ययान्नस्यान्नपतिर्भूयासम् १' 'दधिरस्यदब्धो भूयासं तदमुं दभेयम् २' 'अग्नीषोमौ वृत्रहणौ तयोर्देवयज्यया वृत्रहा भूयासम् ३' इति मन्त्रत्रयात् आग्नेयो याग उपांशुयाज अग्नीषोमीयो यागश्चेति यागत्रयं क्रमेण स्थितम् । तत्र प्रथमतृतीयमन्त्राभ्यां देवयज्यालक्षणाल्लिङ्गाद् आद्यन्तौ यागौ आक्षिप्येते, द्वितीयेन मन्त्रेण द्वितीयो यागस्तु । आग्नीषोमीयलक्षण उपांशुयाजः स्फुरदोष्ठमुद्रस्वरः स्थानवशात्॥ 'उद्गाताऽध्वर्युर्होता' इति । उद्गायतीत्यादिसमाख्ययाऽन्वर्थं संज्ञाबलात् सामयजुर्ऋग्वेदेष्वधिकृत इति निश्चीयते तेष्वङ्गभाव इत्यर्थः । श्रुतिलिङ्गादिविकल्पसंभवे तु श्रुत्यर्थ एव क्रियते, न लिङ्गाद्यर्थोऽर्थविप्रकर्षात्, यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्रैवैन्द्र्या ऋच इन्द्रप्रकाशनसामर्थ्यलक्षणाल्लिङ्गाद् इन्द्रोपस्थापनविनियोगो गार्हपत्यमिति द्वितीयया श्रुत्या बाध्यते, तेन ऐन्द्र्याप्येतया गार्हपत्यस्यैवोपस्थानं भवति ॥

१०२ (16) पुनर्वाच्यव्यङ्ग्ययोर्भेदं दर्शयन्नन्विताभिधानवादिनां दोषमाह-अपि चेति ॥ निषेधविध्यात्मनेति, स्वरूपस्याभेदेऽपीति योगः । निषेधो वाच्यो विधिश्च व्यङ्ग्यः। संशयश्च शान्तशृङ्गार्यन्यतरनिश्चयश्च, तत्र संशयो वाच्योऽन्यतरनिश्चयश्च व्यङ्ग्य इति स्वरूपस्य भेदः ॥

## माणिक्यचन्द्र

पृ.

१७३-१७४ (15) ऽन्नादो भूयासम्' दब्धिरस्यमध्वो भूयासं तदमुं दभेयम्' 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' । इति मन्त्रत्रयादाग्नेयो यागः उपांशुयागः अग्नीषोमीयो यागश्चेति यागत्रयं क्रमेण स्थितम् । तत्र प्रथमतृतीयमन्त्राभ्यां देवयज्यालक्षणाल्लिङ्गादाद्यन्तौ यागावाक्षिप्येते । द्वितीयेन मन्त्रेण द्वितीयो यागः । यागस्तु उपांशुयागः स्फुरदोष्ठमुद्रस्वरस्थानवशात् ॥ उद्गाता अध्वर्युः होतेति उद्गायतीत्यादि समाख्यया अन्वर्थसंज्ञाबलात् सामयजुऋग्वेदेष्वधिकृत इति निश्चीयते । तेष्वङ्गभाव इत्यर्थः । ऐन्द्र्येत्यत्र ऐन्द्र्या ऋच इन्द्रप्रकाशन सामर्थ्यलक्षणाल्लिङ्गादिन्द्रोपस्थापनविनियोगो गार्हपत्यमिति द्वितीयाश्रुत्या बाध्यते तेनैन्द्र्याऽप्येतया गार्हपत्यस्यैवोपस्थापनं भवति ।

१७६ (16) पुनरप्यन्विताभिधायिनं दूषयति-अपि चेति । तत्र तत्रेति । प्रस्ताववक्तृप्रभृतिविशेषे । विध्यात्मनेति । स्वरूपस्य भेदेऽपि यद्येकत्वमिति योगः । निषेधो वाच्यो विधिश्च व्यङ्ग्यः । तथा संशयो वाच्यः, शान्तशृङ्गारिणोरेकतरनिश्चयश्च व्यङ्ग्यः ।

## सोमेश्वर

पृ.

१०३ (17) वोद्धमात्रेति । वाच्यवोद्धा वोद्धेवोच्यते, व्यङ्ग्यवोद्धा तु विदग्ध इति। तथा वाच्योऽर्थः प्रतीतिमात्रकारी, व्यङ्ग्यश्च चमत्कारकारीति वाच्यव्यङ्ग्ययोः कार्यस्य भेदेऽपि ॥

१०५ (18) अत्र वनवासादिरनवधिर्लक्ष्योऽर्थः ।

(19) अत्र राम-पदं साहसैकरसत्वादिलक्ष्यार्थसंक्रमितवाच्यं व्यञ्जकम् ॥ विशेपव्यपदेशेति । यथा व्यङ्ग्यवोद्धुर्विदग्ध इति व्यपदेशः, तथा लक्ष्यार्थवोद्धुरपि लक्षक इति विशेपव्यपदेश इत्यपि समानम् ॥

(20) न खल्विति । यथा 'गङ्गायां घोषः' इत्यादौ मुख्येन गङ्गाशब्दार्थेन तटादिर्लक्ष्यते, न तथा वनादिरपि लक्षयितुं शक्यते । व्यङ्ग्यस्तु विचित्रः प्रकाशते, प्रकरणादिसामग्रीवैचित्र्यात् ।

१०६ (21) न हि लक्षणैकरूपमेव ध्वननं लक्षणानुगमेन ध्वननस्य दर्शनात् । यथा 'गङ्गायां घोषः' इत्यादौ ॥ न च लक्षणानुगतमेव ध्वननं, विवक्षितान्यपरवाच्येऽभिधामूलत्वेन ध्वननस्य भावात् । न हि व्यङ्ग्ये प्रतीयमाने वाच्ये वुद्धिर्दूरीभवति । न चोभयेति ॥ अभिधालक्षणानुसारेणैव ध्वननमित्यपि नेत्याह-अवाचकेति । ललितपरुषादिवर्णानुप्रासस्यार्थाभिधानानुपयोगिनोऽपि रसं प्रति व्यञ्जकत्वस्य दर्शनात् ॥ न च वर्णमात्रानुसारेणैव ध्वननमित्याह-अशब्दात्मकेति, अभिधाव्यापारेणास्पृष्ट

## माणिक्यचन्द्र

पृ.

१७८ (17) वोद्धमात्रेति । वाच्यवेदी वोद्धा, व्यङ्ग्यवेदी तु विदग्धः । तथा वाच्योऽर्थः प्रतीतिमात्रं, व्यङ्ग्यस्तु चमत्कारं करोतीति कार्यभेदः ।

१८० (18) अत्र वनवासादिरनन्तो लक्ष्योऽर्थः ।

१८०-१८१ (19) अत्र रामपदं साहसैकरसत्वाद्यनन्तलक्ष्यार्थसङ्क्रमितवाच्यम् । विशेषेति । यथा व्यङ्ग्यवेदी विदग्ध इति व्यपदिश्यते तथा लक्ष्यवेदी लक्षक इत्यपि तुल्यम्...।

१८१ (20) न खल्विति । अनेन तद्योगादिकं नियतत्वमुक्तं, यथा गङ्गाशब्दो मुख्येन स्वार्थेन सम्वद्धं तटादि लक्षयति न तथा वनादि लक्षयितुं शक्नोति । ध्वनिस्तु प्रस्तावादिसामग्रीवशाद्विचित्रो भाति ।

१८२ (21) लक्षणानुगमेन ध्वननस्य दर्शनात् । तदनुगतमेवेति । लक्षणानुगतमेव । तस्येति ध्वननस्य । भावादिति । न हि व्यङ्ग्ये प्रतीयमाने वाच्याद्बुद्धिर्दूरीभवति । न चोभयेति । अभिधालक्षणारूपमुभयम् । अवाचकेति । अर्थानुपयोगेऽपि कोमलादिवर्णानां रसव्यञ्जकत्वदर्शनात् । अशब्देति । अभिधाव्यापारास्पृष्ट इत्यर्थः । अवलोकनादीत्यादिशब्दात् वाष्पावेशकुचकम्पादि । तस्येति । ध्वननस्य ।

## सोमेश्वर

पृ.

१०६ (21) इत्यर्थः । यथा-मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः' । अत्र गुरुजनमवधीर्यापि यथा तथा साभिलापगर्वमन्थरं विलोकितवतीति स्मरणे विप्रलम्भोद्दीपनम् । 'अवलोकनादि' इत्यादिशब्दाच्छब्दव्यतिरिक्ताधोवक्रत्वकुचकम्पनवाष्पावेशादि ॥ तस्येति ध्वननस्य ।

१०७ (22) 'व्यञ्जकत्वं शब्दानां गमकत्वं, तच्च लिङ्गत्वम्, अतो व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवेति व्यङ्गयव्यञ्जकभावो लिङ्गिलिङ्गभाव एव ।'

## माणिक्यचन्द्र

पृ.

१८४ (22) व्यञ्जकत्वं शब्दानां गमकत्वम्, तच्च लिङ्गत्वमेव । अतो व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवेति, तथा सति लिङ्गिलिङ्गतैव व्यङ्ग्यव्यञ्जकतेत्यर्थः ।

---

# उल्लास ६

## सोमेश्वर

पृ.

१११ (1) अत्र 'अलकाः खला इव' इति शब्दश्लेषप्रतिभोत्पत्तिहेतुरुपमा ॥ उद्भटस्तु 'उपमाप्रतिभोत्पत्तिहेतुरर्थश्लेष एवायं "स्वयं च पल्लवाताम्रा" इत्यादाविव' इत्याह...॥

## माणिक्यचन्द्र

पृ.

१९० (1) अत्रालका इव खला इत्युपमालङ्कारः शब्दश्लेषप्रतिभोत्पत्तिहेतुरिति मम्मटः । उपमाप्रतिभोत्पत्तिहेतुरर्थश्लेषः, 'स्वयं च पल्लवाताम्रभास्वत्करविराजिनी' इतिवदिति तूद्भटः ।

---

# उल्लास ७

| सोमेश्वर | | माणिक्यचन्द्र | |
|---|---|---|---|
| पृ. | | पृ. | |
| ११२ | (1) अनङ्गमङ्गलगृहं चासौ अपाङ्गश्च तस्य भङ्गया विच्छित्त्या तरङ्गितैरुपलक्षितया ॥ | १९२ | (1) अनङ्गमङ्गलगृहस्यापाङ्गस्य भङ्गया विच्छित्त्या तरङ्गितैर्युक्त्या ॥ |
| ११८ | (2) अत्रैकपदप्रत्याय्योऽप्यर्थः कुमुदलक्षणोऽत्रीत्याद्यनेकपदार्थपर्यालोचना व्यवहितत्वेन क्लिश्यमानो वाचकस्य क्लिष्टतामावहति ॥ | १९९ | (2) अत्रैकपदप्रत्याय्योऽप्यर्थः कैरवात्मा अत्रीत्यादिनानापदार्थालोचनाव्यवधानेन क्लिश्यमानो वाचकस्य क्लिष्टतावहः । |
| १२०-१२१ | (3) तस्माद् अस्य नञो विधेयतया प्रधानस्यानूद्यतयाऽप्रधानेन मुक्ताशब्देन सह न समास इष्ट इति स्थितम् । यदाह—नञर्थस्य विधेयत्वे निषेधस्य विपर्यये । समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः ॥ | २०१ | (3) तस्मादस्य नञो विधेयार्थनिष्ठतया प्रधानस्य तथाऽनूद्यमानार्थपरतया तद्व्यस्तवृत्तिना मुक्ताशब्देन समं वृत्तिर्नैवेष्टा । यदाह— नञर्थस्य विधेयत्वे निषेध्यस्य विपर्यये । समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः ॥ |
| १२१ | (4) भवस्य भार्या 'भवानी'। ततो 'भवान्याः पतिः' इत्युक्ते भवं विहाय अन्यस्यापि पत्युः प्रतीतिः । यथा 'चैत्रभार्यायाः पतिः' इत्युक्ते उपपतौ प्रतीतिः ॥ | २०२ | (4) भवस्य पत्नी भवानी, तस्याः पतिरित्युक्ते हरत्यागादन्योऽपि भवेत्, तथा चैत्रपत्नीपतिरित्युक्ते उपपतिर्लभ्यते । |
| १२७ | (4a) नामशब्दोऽक्षमायाम् । 'ये केचिदिह प्रबन्धे देशे काले वा अस्माकमवज्ञां कुर्वन्ति ते किमपि स्वल्पं न किंचिल्लोकोत्तरं वा जानन्ति, तान् प्रति नैष प्रकरणनिर्माणविषयो यत्नः, तेषां स्तोकदर्शित्वात् ।' लोकोत्तरं यज्जानन्तीति व्याख्यातं तत् तेषामुपहासाय । कान् प्रति तर्हीत्याह-'उत्पत्स्यते तु' इति । 'सारेतरविभागज्ञ उत्पत्स्यते कश्चिद्' इति संभाव्यते ॥ | २११ | (4a) नामेत्यसूयायाम् । इहेति । प्रबन्धे देशे काले वा । किमपि स्वल्पं, उपहासे तु लोकोत्तरम् । एष शास्त्रनिर्माणविषयो यत्नः, कान् प्रति हीत्याह उत्पत्स्यते त्विति । सदसद्व्यक्तिज्ञो भावी कश्चिदिति सम्भाव्यते । |
| १३८ | (5) दलत्कन्दलभाग्भूमिः सलवाम्बुदमम्बरम् । वाप्यः फुल्लाम्बुजयुजो जाता दृष्टिविषं मम ॥ | २२६ | (5) दलत्कन्दलभाग्भूमिः सनवाम्बुदमम्बरम् । वाप्यः फुल्लाम्बुजयुजो याता दृष्टिविषं मम ॥ |

## सोमेश्वर

पृ.

१३८ (5) अत्र भजिः सहशब्दो युजिश्चाधिकाः।

१३९ (6) 'घुरी' वाद्यभाण्डविशेषः। घुर्घुरायिता चासौ घुरी च तद्वद् घोरः।

१४३ (7) 'एषोऽहम्' इति। उषानाम्नी शिवायाः सुता। सा च पुराणवृत्तान्तेन वाणासुरसुतेति लोके रूढा। सा चानिरुद्धेन कामसुतेन सह 'स्वप्नलब्धं वरं प्राप्स्यसि' इति गौर्या दत्तेन प्रसादेन परिणायिता। स च गौरीमुखविनिर्गतो वरः साधिष्ठायकत्वाद् देवतारूपोऽन्येषां पुर आत्मानं प्रशंसन्निदमाह। अनिरुद्धेन सह या घटना तयाधिगतं आभिरूप्य—लक्ष्म्याः सुरूपतायाः फलं यया।

१४७ (8) स हि यथाप्रक्रममेकरसप्रसृतायाः प्रतिपत्तृप्रतीतेरुद्धात इव परिस्खलनखेददायी रसभङ्गाय पर्यवस्यति।

१५० (9) 'संप्रति द्वयं च' इति अतिरम्यम्। यत् किल पूर्वमेका सैव दुर्व्यसनदूषितत्वेन शोच्या जाता संप्रति पुनस्त्वया तस्याः सहायकमिव आरब्धमित्युपहस्यते। प्रार्थना-शब्दोऽपि न रम्यः, यतः काकतालीयन्यायेन तत्समागमः कदाचिन्न वाच्यतावहः। प्रार्थना पुनरत्यन्तं कलङ्ककारिणी। सा च त्वं चेति द्वयोरप्यनुभूयमानपरस्परस्पर्द्धिलावण्यातिशयप्रतिपादनपरत्वेन उपात्तम्। 'कलावतः कान्तिमती इति च मतुप्प्रत्ययेन द्वयोरपि प्रशस्यता प्रतीयते।

## माणिक्यचन्द्र

पृ.

२२६ (5) अत्र भजिस्सह शब्दो युजिश्चाधिकः।

२२८ (6) घुरी भाण्डवाद्यविशेषः। घुर्घुरायिता चासौ सा च, तद्वद्धोरः।

२३२-३३ (7) हरगौर्योरुषाख्या सुता केनापि वृत्तान्तेन वाणासुरपुत्रीति ख्याता। तां च स्मरसुतेन अनिरुद्धाख्येन स्वप्ने परिणाय्य कोऽपि स्वं प्रशंसन्निदमाह—घटनेति। घटनयाऽधिगतमभिरूपलक्ष्म्याः फलं ययेति वृत्तिः। अप्यर्थं इति। अपि शब्दभावाभावयोरुत्कर्षापकर्षाभ्यां दूरवर्तित्वं स्यादित्यर्थः।

२३६ (8) एष हि यथाप्रक्रममेकरसप्रसृताया बोद्धृप्रतीतेः रोधेनैव स्खलनखेददायी रसभङ्गाय जायते।

२४१ (9) 'सम्प्रति द्वयं च' इत्यतीव चारु, यत्किल प्रागेका सैवास्थानपातेन शोच्याऽभूत्, इदानीं तु त्वया तस्यास्तथाविधदुरध्यवसायसाहाय्यमिवारब्धम्, इत्युपहस्यते। काकतालीयन्यायेन कपाल्यपि यदि स्यादस्तु न पुनः केनापि प्रकर्षेणार्थ्यत इति प्रार्थनाऽप्ययुक्ता। कपाल्यर्थे तपस्यादिव्याजेनार्चेम (?) नादिकमपि मण्डितमित्यर्थः। 'सा च त्वं' चेति द्वयोरपि लावण्यादिसाम्यप्रतीतये प्रयुक्तम्। 'कलावतः कान्तिमती'ति च मतुः प्रशंसाप्रतीतिकृत्।

## सोमेश्वर

पृ.

१५० (10) 'त्वं शब्दादिति । समुच्चयद्योतको हि चकारः समुच्चीयमानार्थाद् अनन्तरमेव प्रयोज्य इति क्रमः ।

१५० (11) पुनः शब्दो हि व्यतिरिच्यमानार्थान्तर्येणैव प्रयोगमर्हतीति क्रमः ।

१५१ (12) श्रीनियोगादिति । तदुक्तम्—
उक्तिस्वरूपावच्छेदकरो यत्रेतिरिप्यते ।
न तत्र तस्मात् प्राक् किंचिदुक्तेरन्यत्पदं वदेत् ॥
इतिना नेवेतरेषामप्यव्ययानां गतिः समा ।
ज्ञेयेत्थमेवमादीनां तज्जातीयार्थयोगिनाम् ॥
यतस्ते चादय इव श्रूयन्ते यदनन्तरम् ।
तदर्थमेवावच्छिन्द्युरासमञ्जस्यमन्यथा ॥

१५६ (13) क्रमानुष्ठानाभावो वा दुष्क्रमत्वं यथा–काराविऊण खउरं गामउडो मज्जिऊण जिमिऊण ।
नक्खत्तं तिहिवारे जोअसिअं पुच्छिउं लग्गो ॥

१६० (14) अनभिव्यक्ताकारं जगतोऽपीन्द्रियाणि यत्स्वरूपं न निर्णेतुं समर्थानीति भावः । आभासेनैव मणीकृता अन्येऽश्मानो येन स चासौ सुमणिश्च । छायामात्रेत्युक्ते हि च्छाययैवेति सनियमत्वं सावधारणत्वं गम्यते, तच्चात्र नोक्तमिति नियमे वाच्ये 'तस्याभासे'त्यनियम उक्तः ।

## माणिक्यचन्द्र

पृ.

२४० (10) त्वंशब्दादिति । समुच्चयद्योती हि चकारः समुच्चीयमानार्थादनन्तरमेव वाच्य इति क्रमः ।

(11) एवं पुनश्शब्दोऽपि व्यतिरिच्यमानार्थानन्तर्येणैव प्रयोज्योऽन्यथा त्वक्रमत्वं वाच्यम् ।

२४२ (12) श्रीनियोगादिनीति । तदुक्तम्–
"उक्तिस्वरूपावच्छेदफलो यत्रेतिरिप्यते ।
न तत्र तस्मात्प्राक्किञ्चिदुक्तेरन्यत्पदं वदेत् ॥ १ ॥
उपाधिभावात्स्वां शक्तिं स पूर्वत्रादधाति हि ।
न च स्वरूपावच्छेदः पदस्यान्यस्य सम्मतः ॥ २ ॥
इतिनैवेतरेषामप्यव्ययानां गतिस्समा ।
ज्ञेयेत्थमेवमादीनां तज्जातीयार्थयोगिनाम् ॥ ३ ॥
यतस्ते चादय इव श्रूयन्ते यदनन्तरम् ।
तदर्थमेवावच्छिन्द्युरासमञ्जस्यमन्यथा" ॥ ४ ॥ इति ।

२४७ (13) क्रमानुष्ठानाभावो वा दुष्क्रमत्वं, यथा–क्षौरं विधाप्य स्नानादि भोजनादि विधाय च ॥
कश्चिच्चचाल दैवज्ञं प्रष्टुं तिथिवारकान् ।

२५१-२५२ (14) यद्वा-अनुल्लिखितान्ययमीदृगित्यनिर्णयपराण्यक्षाणि यस्येति तत्तथा । उत्कर्षाय प्रतियोगिनः कल्पनं चिन्ता । आभासेनैव मणिकृता अन्याश्मानो येन स चासौ सुमणिश्च स तथा । अत्र एव शब्दाभावे सनियमत्वं परिवृत्तम् । छायामात्रेत्युक्तौ तु मात्रशब्दान्नियमो लभ्यते ।

## सोमेश्वर

पृ.

१६१-६२ (15) तथा हि 'रावणः' इति जगदाक्रन्दकारित्वाद्यर्थान्तरसंक्रमितवाच्यो जनकस्य धर्मवीरं प्रत्यनुभावतां प्रतिपद्यते । ऐश्वर्यं पाण्डित्यं परमेशभक्तिर्देशविशेषोऽभिजन इत्येतत्सर्वं लोकमवबाधमानस्याधर्मपरस्य नार्थक्रियाकारकमिति तावतोऽर्थस्य तिरस्कारकत्वेनैव रावणचेष्टितं निर्वाहणीयम्। यत्तु अन्यदुपात्तं 'क नु पुनर्' इति तद् यदि ससंदेहत्वेन योज्यतेऽथाक्षेपत्वेनाथापि 'नेदृग्वरो लभ्यते' इति अर्थान्तरन्यासत्वेन तथापि प्रकृतस्य धर्मवीरस्य न कथंचिद् निर्वाहः ॥

१६२-१६३ (16) न हि वाताहारत्वाद् अधिको दम्भस्तोयकणव्रतम् । नापि ततोऽधिकं दम्भवत्त्वं मृगाजिनवसनमिति । व्युत्क्रमेण चोक्तं दम्भप्रकर्षं विधत्ते, न च तथोक्तमिति विध्ययुक्तत्वम् ॥

१६३ (17) किमसत्प्राणान् दमयसीति विधौ वाच्ये विरहिप्राणदमनेत्यनुवादोऽयुक्तः ।

(18) इहान्वयव्यतिरेकाभ्यामर्थस्यैव अश्लीलत्वं, पूर्वत्र तु पदवाक्ययोरिति विवेकः ।

१६४ (19) विदग्धजनमनोविलोभनक्षमकान्तारत्नोपमानभावेन मालाया उपादानाद् उत्कृष्टपुष्पग्रथितत्वावगमाय प्रयुक्तः ।

(20) 'त्यज करि-कलभप्रेमबन्धं करिण्याः'। अत्र करि-शब्दात् ताद्रूप्यावगतिः ।

## माणिक्यचन्द्र

पृ.

२५३-२५४ (15) अयं भावः–रावण इत्येतत् जगदाक्रन्दकारित्वाद्यर्थान्तरं वदञ्जनकस्य धर्मवीरं प्रत्यनुभावनामेति । ऐश्वर्यं पाण्डित्यं परमेशभक्तिर्देशविशेषोऽभिजन इत्येतत्सर्वं लोकवाक्यबाधेनाधर्मपरस्य निष्फलमिति तावतोऽर्थस्य तिरस्कारकत्वेनैव रावणचेष्टितं निर्वाहणीयम्। यत्त्वन्यदुपात्तं क नु पुनरिति तद्यदि ससन्देहत्वेन योज्येत अथाक्षेपत्वेनापि नेदृग्वरो लभ्यते इत्यत्रार्थान्तरन्यासत्वेन तथाप्यप्रकृतस्य धर्मवीरस्य न कथंचिन्निर्वाहः ततोऽस्थानमुक्तः ।

२५५ (16) न हि वाताहारत्वादधिको दम्भोऽम्भःकणव्रतं, नापि ततोधिकं दम्भनत्वं मृगाजिनवसनमिति । व्युत्क्रमोक्तिस्तु प्रकृतस्य दम्भप्रकर्षप्रभावतिरस्कृतगुणानुशोचनमयनिर्वेदस्याङ्गं स्यादेवेति विध्ययुक्तत्वम् ।

२५६ (17) अत्र किमित्यसत्प्राणान् दमयसीति विधौ वाच्ये प्राणदमनेत्यनुवादोऽयुक्तः ।

(18) इहान्वयव्यतिरेकाभ्यामर्थ एवाश्लीलः, पश्चात्तु पदवाक्ये अश्लीले इति भावः ।

२५८ (19) विदग्धविलोभनक्षमकामिन्युपमानभावेन मालाया उपादानादद्भुतपुष्पग्रथितत्वमवगमयतीत्यर्थः ।

(20) 'त्यज करिकलभ ! प्रेमबन्धं करिण्याः' । अत्र करिशब्दात्ताद्रूप्यावगतिः ।

## सोमेश्वर

पृ.

१७३ (21) भवन्वशिथिलः इत्यादिना समाप्तेऽपि वाक्ये ख्याप्यते इति वाक्यार्थान्तरमेव उपात्तं, न पुनः प्राच्यस्यैव वाक्यार्थस्य विशेषणतया । यथा 'नववयोलास्याय वेणुस्वनः' इति ॥

१७५ (22) न च केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति यथा 'शृङ्गारहास्यकरुणाः' इत्यादौ, तस्माद् अन्वयव्यतिरेकाभ्यां अभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनां, न त्वभिधेयत्वं कथंचिदित्युक्तम् । ततो व्यभिचारिरसस्थायिभावानां स्वशब्दोक्तिर्दोष इत्यर्थः । एतेन च 'रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम् । स्वशब्दस्थायिसंचारिविभावाभिनेयास्पदम्' इत्यस्य व्याख्यायां 'पञ्चरूपा रसाः' इत्युपक्रम्य 'तत्र स्वशब्दाः शृङ्गारादयः शृङ्गारादेर्वाचका' इति भट्टोद्भटोक्तं निरस्तम् ॥

(23) व्रीडादीनामिति, स्वशब्दोपादानमिति योगः ।

१७६ (24) यत्रापि स्वशब्देन निवेदितत्वमस्ति तत्रापि स्वशब्दप्रयुक्तया विभावादिप्रतिपत्त्यैव रसादीनां प्रतीतिः । स्वशब्देन सा केवलमनूद्यते ।

१७८ (25) तथा कादम्बर्यां विप्रलम्भबीजेऽप्युपक्रान्ते तदनुपयुक्ताटवीशबरादेरतिवर्णनम् ॥

(26) विस्मृतिरिति । अनुसंधिर्हि सहृदयसर्वस्वम् ।

## माणिक्यचन्द्र

पृ.

२६७ (21) भवन्वशिथिल इत्यादिना समाप्तेऽपि परशुवर्णने येनानेनेति वाक्यान्तरेण पुनस्तस्यैव वर्णनमारब्धं न दुष्टं, वाक्यानन्तर्गतत्वेनोक्तत्वात् । विशेषणत्वेनोक्तौ तु दुष्टत्वमेव । यथा-नववयो लास्याय वेणुस्वन इत्यादौ ।

२६९ (22) न च केवलशृङ्गारादिशब्दान्विते विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिः, यथा-'शृङ्गारहास्यकरुणाः' इत्यादौ । तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादेर्न त्वभिधेयत्वं कथञ्चिदिति स्वशब्दवाच्यता दोष इत्यर्थः । एवं द्वितीय एव पक्षो न्याय्यः । एतेन शृङ्गाराद्याः शब्दाः शृङ्गारादेर्वाचकाः इत्युद्भटोक्तं निरस्तम् ।

२६८ (23) व्रीडादीनामिति । स्वशब्दोपादानमिति योगः ।

२७० (24) यत्रापि स्वशब्दनिवेदितत्वं विभावादिप्रतिपादितत्वमप्यस्ति तत्रापि विभावादिमुखेनैव रसादिप्रतीतिः, स्वशब्देन सा केवलमनूद्यते ।

२७२ (25) तथा हि कादम्बर्यां 'रूपविलासे'त्यादिना महाविप्रलम्भबीजमुपक्षिप्य तदनुपयोगिनामटवीशबरेशाश्रममुनिपुरीनृपादीनाम् ।

२७३ (26) विस्मृतिरिति । अनुसन्धानं हि सहृदयतायाः सर्वस्वम् ।

## सोमेश्वर

पृ.

१८२ (27) अवदातमिति सातिशयं कर्म। अधिकं त्विति। अयं भावः। केवलमनुष्यस्य सप्तार्णवलङ्घनमसंभाव्यमानतयानृतमिति हृदये स्फुरदुपदेश्यस्य चतुर्वर्गोपायस्याप्यलीकतां बुद्धौ निवेशयति । .. असंबद्धतैवैतेषु शास्त्रेपूच्यते इति प्रतीतिः स्यादिति।

१८३ (28) जगद् जगदंशाश्च देशः। तत्र सामान्यविवक्षायां जगदेकं, यथा 'जगति सकले न्यालादीनाम्' इति॥ भूर्भुवः स्वरित्यादिविशेषविवक्षया त्वनेकं, यथा—
नमस्त्रिभुवनाभोगवृत्तिखेदभरादिव॥ महर्जनस्तपःसत्यमित्येतैः सह सप्तेत्यन्ये। यथा-हर्षस्य सप्तभुवनप्रथितोरुकीर्तेः॥
तानि सप्तभिर्वायुस्कन्धैः सह चतुर्दशेत्यपरे। यथा-जयति चतुर्दशलोकवल्लिकन्दः॥
तानि सप्तभिः पातालैः सहैकविंशतिरित्येके। यथा-कीर्तयस्तव लिम्पन्तु भुवनान्येकविंशतिम्॥
तत्र भूर्लोके सप्त जम्बूद्वीपादयो द्वीपाः॥

१८४ (29) ते च समुद्रास्त्रयश्चत्वारः सप्त वेति कविसमयः॥

(30) कालः काष्ठादिभेदभिन्नः।

१८६-१८७ (31) वयः शैशवादि। जातिर्ब्राह्मणत्वादिका स्त्रीपुंसादिका वा। आदिग्रहणाद् विद्यावित्तकुलपात्रादयो लभ्यन्ते। वेषः कृत्रिमं रूपम्। व्यवहारश्चेष्टा।

## माणिक्यचन्द्र

पृ.

२७४-७५ (27) अवदानमिति। सातिशयं कर्म। अधिकमिति। अयं भावः। स्वःपातालगमनाब्धिलङ्घनादिकमदिव्यस्य वर्ण्यमानमसम्भाव्यतयाऽलीकमिति चिन्तयन्तो विनेया उपदेशस्य चतुर्वर्गोपायस्याप्यलीकतां कल्पयन्ति सर्वमिदं शास्त्रोक्तमसम्बद्धमितीति।

२७५ (28) विश्वं, विश्वैकदेशाश्च देशः। एकं द्वे त्रीणि सप्त चतुर्दशैकविंशतिर्वा विश्वानि स्युः। स्वर्गमर्त्यपातालमहर्जनस्तपःसत्यैः सप्तभिश्च वायुस्कन्धैः सप्तभिश्च पातालैः। विशेषविवक्षायामनेकत्वं, सामान्यविवक्षायां त्वैक्यम् तत्र भूमध्ये जम्बूद्वीपप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराद्याः सप्त द्वीपाः।

२७५ (29) एकस्त्रयः चत्वारः सप्ताब्धयो वाच्या इत्यादिकविप्रसिद्ध्या सर्वं घटते।

२७५ (30) कालः- काष्ठाकलामुहूर्तरात्रिदिनपक्षमासर्तुवर्षादिभेदभिन्नः

२७५-७६ (31) वयः शैशवादिकम्। जातिः स्त्रीपुंसादिका, ब्राह्मणत्वादिका वा आदिशब्दाद्विद्यावित्तकुलादयः। व्यवहारादीत्यादिशब्दादाकारवचनादयः। व्यवहारा-

## सोमेश्वर

पृ.

१८६-१८७ (13) आदि-शब्दाद् आकारवचनादयो गृह्यन्ते ॥ वेपव्यवहारादीति । देशादिभिः प्रत्येकं संवध्यते, तेन देशे वेपव्यवहाराकारवचनानामौचित्याद् निवन्धः कार्य इत्यर्थः । यथा कन्यकुब्जीयदेशे उद्धतो वेपो दारुणो व्यवहारो भयंकर आकारः परुषवचनमनुचितम् । म्लेच्छेषु तदेवोचितम् । तथा नागरेषु यदुचितं तदेव कनककुण्डलादि ग्राम्येष्वनुचितम् । एवं कालादावप्यूह्यम् ॥

१८७ (32) यथौत्सुक्यनामा व्यभिचारी साक्षान्निवद्धश्चमत्कारी न तथा तस्यानुभावश्चिन्तादिरूपं कार्यं प्रतीतिकृदिति स्वशब्देनोक्तौ न दोषः ।

१९१ (33) 'वीराः स्वदेहान्' इत्यादिना तदीयोत्साहाद्यवगत्या कर्तृकर्मणोः समस्तवाक्यार्थानुयायितया प्रतीतिरिति शृङ्गारबीभत्सयोरन्तरेऽनिवेशितस्यापि सुतरां वीरस्य व्यवधायकता प्रतीयत इति भावः ।

(34) बोधिसत्त्वस्य सिंहीं स्वकिशोरभक्षणप्रवृत्तां प्रति निजं शरीरं वितीर्णवतः केनचिच्चाटुकं क्रियते । 'प्रोद्भूतः सान्द्रपुलकः' परार्थसंपत्तिजेनानन्दभरेण यत्र । रक्ते रुधिरे मनोभिलाषो यस्याः । अनुरक्तं च मनो यस्याः । मुनयश्चोद्बोधितमदनावेशाश्चेति विरोधः ॥ 'जातस्पृहैः' इति च 'वयमपि यदि कदाचिदेवं कारुणिका भविष्यामस्तदा सत्यतो मुनयः' इति मनोराज्ययुक्तैः ।

## माणिक्यचन्द्र

पृ.

२७५-७६ (31) दीति देशादिभिः प्रत्येकं योज्यम् । तेन देशवेषादेरौचित्येन निवन्धः कार्य इत्यर्थः । एवं कालादौ योज्यम् ।

२७६ (32) यथौत्सुक्यनामा सञ्चारी साक्षात् स्वपदेनोक्तश्चमत्कारी न तथा तदनुभावश्चिन्तादिरूपश्चमत्कारीति स्वशब्देनौत्सुक्यनामा संचारी सम्प्रोक्तः ।

२८० (33) 'वीराः स्वदेहान्' इत्यादिनोत्साहाद्यवगत्या कर्तृकर्मणोः समस्तवाक्यार्थानुयायितया प्रतीतिरिति मध्यपाठाभावेऽपि सुतरां वीरस्य व्यवधायकता ।

२८१ (34) स्वडिम्भभक्षणप्रवृत्तसिंहिकायाः स्वाङ्गं ददतो बुद्धस्य केनापि चाटुः क्रियते । पुलकोद्भेदः परार्थसम्पादनसुखाभ्याम् । रक्तमसृगनुरक्तं च । मुनयश्चोद्बोधितस्मरावेशाश्चेति विरोधः जातस्पृहैरिति च वयमप्येवं कदा कृपालवो भविष्याम इति भावः ।

## उल्लास ८

### सोमेश्वर

पृ.

२९६ (1) रसस्यैव माधुर्यादयो धर्माः। तर्हि कथं 'मधुरा वर्णाः' इति व्यवहार इत्याह-क्वचित्त्विति । आकार एवास्य शूर इति । यथा शौर्यमुपचारात् तदभिव्यञ्जके शरीरे लोका व्यवहरन्ति तथा वर्णेषु माधुर्यादयः । मधुररसाभिव्यञ्जकेषु वर्णेषूपचरितं माधुर्यमित्यर्थः ।

२०१ (2) 'चित्ते' इति । 'चट्टुट्टदि' निखाता भवति । 'न खुट्टदि' न न्यूनीभवति । 'विसट्टदि' विकसति । 'तरट्टी' प्रगल्भा ।

२०१ (3) 'अलंकारा अपि गुणवत्समवेता एवेति' केचित्, तन्नेत्याह-अनुप्रासेति । 'उभयेषामपि समवायेन स्थितिः' इत्यभिधाय 'तस्माद् गड्डरिकाप्रवाहेण गुणालंकारभेदः' इति भामहविवरणे यद् भट्टोद्भटोऽभ्यधात् तद् असत् ।

२०५ (4) यद् वामनः 'यस्मिन् सति बहून्यपि पदानि एकपदवद् भासन्ते ॥' स श्लिष्यत्यनेन पदं पदान्तरेण मसृणतयेति श्लेषः, यथा 'अस्त्युत्तरस्याम्'—।

२०५ (5) आरोहपूर्वोऽवरोहः समाधिः, यथा 'निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे' ॥

(6) यस्मिन् सति नृत्यन्तीव पदानीति वर्णना स्यात् ।

२०६ (7) पदार्थे वाक्यवचनं, यथा-'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः'। अत्र चन्द्रपदवाच्येऽर्थे 'नयनसमुत्थं ज्योतिरत्रेः' इति वाक्यं प्रयुक्तम् ॥

### माणिक्यचन्द्र

पृ.

२८६ (1) रसस्यैव यन्माधुर्यादि तत्कथं मधुरौजस्विप्रसन्ना वर्णा इति प्रतीतिरित्याह- क्वचित्त्विति । शौर्यादीति । शौर्यादिसंयुक्तस्य । आकार एवेति । यथा शौर्यमुपचारात् तद्व्यञ्जके काये व्यवह्रियते, तथा वर्णानां मधुरादिरसव्यञ्जकानां माधुर्यादीति भावः ।

२८८ (2) चित्त इति । चट्टुट्टदि निखाता भवति । खुट्टदि न न्यूनतामेति । विसट्टदि विकसति । तरट्टी प्रौढा ।

२८९ (3) शब्दार्थालङ्काराणां गुणवत्समवायेन स्थितिरिति भामहवृत्तौ भट्टोद्भटेन भणनमसत् ।

२९४ (4) 'मसृणत्वश्लेषः यस्मिन् सति बहून्यपि पदान्येकपदवद्भान्ती' ति वामनः, यथा— "अस्त्युत्तरस्यां दिशि देवतात्मा" ।

२९५ (5) तस्मात् "आरोहावरोहक्रमः समाधिः" इति वामनः ।

(6) यस्मिन् सति नृत्यन्तीव पदानि इति प्रतीतिरिति वामनः ।

२९८ (7) पदार्थे वाच्ये वाक्योक्तिर्यथा-चन्द्रपदे वाच्येऽत्रिनयनसमुत्थं ज्योतिरित्युच्यते ।

| सोमेश्वर | माणिक्यचन्द्र |
|---|---|
| पृ. | पृ. |
| २०६ (8) वाक्यार्थे पदाभिधा यथा—'दिव्येयं न भवति किं तर्हि मानुषी' इति वाच्ये 'निमिषति' इत्युक्तम् । | २९८ (8) वाक्यार्थे पदोक्तिर्यथा-दिव्यैषा न स्यात् किन्तु मानुषीतिवाच्ये निमिषतीत्युक्तिः । |
| २०७ (9) घटनारूपः श्लेषः । क्रमकौटिल्यानुल्बणत्वोपपत्तियोगश्च घटना । नेत्रनिमीलनादीनां क्रमः परिपाटी । कौटिल्यं वैदग्ध्यम् । तयोरनुल्बणत्वेनाग्राम्यत्वेनोपपत्त्या युक्ततया योजनं श्लेषः । यथा-'दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्यादराद्' इति । | २९९ (9) नेत्रपिधानादेर्यः क्रमो यच्च कौटिल्यं तयोरनुल्बणत्वेनाग्राम्यत्वेनोपपत्त्या युक्ततया यद्योजनं योगस्तद्रूपा घटना या तदात्मा श्लेषः । यथा— दृष्ट्वैकासनसङ्गते प्रियतमे पश्चादुपेत्यादरात् । एकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः । ईषद्वक्रितकन्धरः सपुलकस्वेदोल्लसन्मानसामन्तर्हासलसत्कपोलपुलको धूर्तोऽपरां चुम्बति । |
| २०८ (10) छन्दोविशेषविशेष्या गुणसंपत्तिरिति केचित् । तथा हि स्रग्धरादिष्वोजः, इन्द्रवज्रादिषु समता, विषमवृत्तेष्वौदार्यं, तच्च सव्यभिचारम् ॥ | ३०१ (10) स्रग्धरादावोजः इन्द्रवज्रादौ प्रसादः मन्दाक्रान्तादौ माधुर्यम्, शार्दूलादौ साम्यम्, विषमवृत्तेष्वौदार्यमिति छन्दोविशेषसाध्या गुणाः इत्येके । तदप्यसत् । |
| २११ (11) एकं धर्मादिपुरुषमुद्दिश्यानन्तवृत्तान्तवर्णनप्रधाना शूद्रकादिवत् परिकथा ॥ मध्याद् उपान्ततो ग्रन्थान्तरतः सिद्धमितिवृत्तं यस्यां वर्ण्यते सा खण्डकथा । | ३०५ (11) एकं पुमर्थमुद्दिश्य प्रकारभङ्ग्या भूरिवृत्तान्तवर्णनारूपायां परिकथायां त्वितिवृत्तस्य न्यासे भरः कार्यो न रसानाम् । मध्यादुपान्ततो वा ग्रन्थान्तरप्रसिद्धमितिवृत्तं यस्यां वर्ण्यते सा खण्डकथा । पूर्णकथा तु प्रसिद्धा । |
| २१२ (12) तत्र मुक्तकेषु रसबन्धाश्रयेण दीर्घसमासा रचना, अन्यथा तु कामचारः । सन्दानितकादिषु विकटबन्धौचित्याद् मध्यमसमासादीर्घसमासे एव रचने । प्रबन्धाश्रितेषु तु मुक्तकादिषु 'त्वामालिख्य' इत्यादिषु यथो- | (12) तत्रैषां मध्ये मुक्तकेषु रसबन्धाश्रयेण न दीर्घा वृत्तिः कार्या । अन्यथा तु स्वेच्छा । सन्दानितकादौ विकटबन्धत्वेन वृत्त्यभावस्त्याज्यः । प्रबन्धाश्रिते तु मुक्तकादौ यथोक्तप्रबन्धविशेषा आराध्याः । पर्याबन्धेषु |

## सोमेश्वर

पृ.

२१२ (12) कप्रबन्धविशेषौचित्यम्। पर्याबन्धे तु असमासा-मध्यमसमासे एव, कदाचिद् रौद्रादिविषये दीर्घसमासायामपि घटनायां परुषा ग्राम्या च वृत्तिस्त्याज्या। परुषोपनागरिकाग्राम्याणां वृत्तीनां चौचित्यं यथाप्रबन्धं यथारसं चानुसर्तव्यम्।

## माणिक्यचन्द्र

पृ.

३०५ (12) तु दीर्घा वृत्तिस्त्याज्या। कदाचिद्रौद्रादिविषये दीर्घायामपि वृत्तौ परुषाग्राम्ये वृत्ती त्याज्ये।

---

# उल्लास ९

## सोमेश्वर

पृ.

२२३ (1) 'नारीणां स्त्रीणां, न अरीणाम्' इत्यन्यथा प्रयुक्तम्। 'जानासि' इत्येकस्योक्तिः। 'कश्चेतनः' इत्यन्यस्य। 'वामानाम्' प्रतिकूलानां स्त्रीणां च। 'हितकृद्' इत्यादि पुनराद्यस्योक्तिः। हितं करोति कृन्तति च। 'अबलानाम्' स्त्रीणां दुर्बलानां च। 'बलाभावेन प्रसिद्धात्मनो' दुर्बलस्य दैत्यस्य विनाशेन प्रसिद्धात्मन इन्द्रस्य।

२२४ (2) यायावरीयस्तु 'अभिप्रायवान् पाठधर्मः काकुः स कथमलंकारी स्याद्' इति न काकुवक्रोक्तिमाह।

२२६ (3) अत्र यत् पूर्वार्धे दवदहनत्वं विधेयं तुहिनदीधि[ति]त्वं चानुवाद्यं, तद् द्वयमप्युत्तरार्धे विपरीतं ज्ञेयम्।

## माणिक्यचन्द्र

पृ.

३०६ (1) नारीणां स्त्रीणाम्। भङ्गे तु न अरीणाम्। वामाः स्त्रियः प्रतिकूलाश्च। हितकृदिति। हितं करोति कृन्तति च। बलं शक्तिर्बलो दैत्यश्च तदभावेनाप्रसिद्धात्मा दुर्बलो बिडौजाश्च।

३०८ (2) "अभिप्रायवान् पाठधर्मः काकुः स नालङ्कारी स्यादिति" तु यायावरीयः।

३१२ (3) अत्र पूर्वार्धे दवदहनो विधेयः। तुहिनदीधितिरनुवाद्यः। एतदेवोत्तरार्धे विपरीततया ज्ञेयम्।

## सोमेश्वर

पृ.

२२८ (4) 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इत्यादौ च पौनरुक्त्यदोषाभावेऽपि न यमकत्वम्।

२४० (5) प्राकृतेऽन्योऽर्थः। 'मम देहि रसं धर्मे तमोवशां तमःपरिभूतामाशां गमागमात् संसाराद् हर। ण इति नः। तथा हे हरवधु शम्भुपत्नि शरणं त्वम्। चित्तमोहोऽपसरतु मे सहसा'। 'चित्तमोह'मिति 'गुणाद्याः क्लीबे' इति प्राकृते नपुंसकत्वम्। एवं संस्कृतमागध्योः संस्कृतपैशाच्योः संस्कृतशौरसेन्योः संस्कृतापभ्रंशयोः श्लेषो ज्ञेयः।

(5a) संस्कृतप्राकृतयोर्योगः, यथा—सरले सहास-रागं परिहर रम्भोरु मुञ्च संरम्भम्। विरसं विरहायासं वोढुं तव चित्तमसहं मे।

२४१ (6) 'सहस्रम्' इति क्रियाविशेषणम्। 'स्यां स्याद्' इति च। नन्दतीति 'नन्दिता' नन्दिनो गणविशेषस्य च भाव इति तृच्-त-प्रत्यययोः श्लेषः।

(7) 'हे हर सर्वस्य त्वं सर्वस्वम्। भवः संसारः, तच्छेदनिष्ठः। नयोपकारयोः सांमुख्यं शरीरवर्तनम्। आयासि [आ] गच्छसि'॥ अपरोऽर्थः। 'हर अपहर, भव संपद्यस्व, नय निवारय। आयासि खेदकारि। वर्तनं वृत्तिं विस्तारय'। अत्र स्यादि-त्याद्योर्विभक्त्योः। वचनश्लेषे तूदाहृतम्॥

## माणिकचन्द्र

पृ.

३१५ (4) "उदेति सविता ताम्रस्ताम्र एव" इत्यादौ तत्र पौनरुक्त्यदोषाभावाद्यमकत्वं प्रसज्येतेत्यर्थ......।

३२२-२३ (5) प्राकृतपक्षे तु हे हरवधु। शम्भुपत्नि मम देहि रसं धर्मे तमोवशामाशां गमागमात् भवात् हर स्फुटय। तथा नोऽस्माकं शरणं त्वं। चित्तमोहोऽपसरतु मे सहसा बलेन। प्राकृतत्वाच्चित्तमोहमित्यत्र क्लीबत्वम्। एवं संस्कृतस्यापभ्रंशादिभाषाश्लेषोऽपि ज्ञेयः।

३३१ (5a) तत्र संस्कृतस्य प्राकृतभाषया श्लेषो यथा-सरले सहास-रागं परिहर रम्भोरु! मुञ्च संरम्म्।
विरसं विरहायासं वोढुं तव चित्तमसहं मे।

३२३ (6) क्रियाविशेषणं सहस्रशब्दो बाहुल्यार्थः। स्यां स्यादिति च। नन्दतीति नन्दिता। नन्दिनो गणविशेषस्य भावो नन्दितेति चाख्यातकृत्तद्धितप्रत्ययानां भेदः।

(7) हे शम्भो त्वं सर्वस्य सर्वस्वं। त्वमेव संसारोच्छेदतत्परस्सन् नयोपकारयोः साम्मुख्यं शरीरवर्तनमायासि आगच्छसि। अन्यच्च हर स्फोटय। भव सम्पद्यस्व। नय निवारय। आयासि खेदकारि वर्तनं तनु प्रथयेति। सुप्तिङ्विभक्त्योर्भेदः।

## सोमेश्वर

पृ.

२४१ (8) प्रकरणादिना चाभिधाया अनियन्त्रितत्वात् श्लेष एव, न तु ध्वनिः ।

२४३ (9) किसलयवद् दीपमानाभ्यां कराभ्यां शोभते । सुखेनाप्तुं यत्र शक्यं फलं तत्र तु लुब्धानामीहितं प्रददाति ।

(10) अभङ्गत्वमात्रेण अर्थश्लेषत्वं नोपपन्नमित्यर्थः तर्हि अर्थश्लेषस्य निर्विषयत्वमित्याह–अर्थश्लेषस्येति । अर्थश्लेषः, यथा–'स्तोकेने'ति ।

(11) सह कलकलेन वर्तन्ते, सकलाः कला यस्य च ।

२४४ (12) 'इहापि' इति शब्दालंकारमध्ये । न च साधारणधर्मप्रयोगशून्ये उपमा भविष्यति, मनोज्ञत्वादिसाधारणधर्मसहिते तु श्लेष इति वाच्यम्, यतः पूर्णोपमाया निर्विषयत्वं स्यात् ॥ तर्हि यदाऽस्माकं मते पूर्णोपमाया निर्विषयत्वं तथा भवतां श्लेषस्य निर्विषयत्वमित्याशङ्क्याह–'देव त्वम्' इति ।

२४५ (13) न चेति । यथा विरोधाभासो विरोधः, न तथा श्लेषाभासः श्लेषः । उभयार्थप्ररोहे हि श्लेष इत्यर्थः ॥

२४५ (14) एवमत्रापि वर्ण्यमानस्य मुक्तामणित्वरूपणान्यथानुपपत्त्या वंशस्य कुलस्य वेणुत्वरूपणमनुक्तमपि गम्यते, एकदेशविवर्त्तित्वं च पूर्ववद् उद्भावनीयमेकस्मिन् देशे विशेषेण वर्तनात् । एकदेशविवर्तिरूपकस्य चास्य परंपरितरूपकत्वं काव्यप्रकाशकारमते ।

## माणिक्यचन्द्र

पृ.

३२३ (8) अत्र प्रकरणादिना नियमाभावे श्लेषो न तु ध्वनिः ।

(9) पल्लववदाताम्रभास्वद्भ्यां कराभ्यां शोभते । सुखेनाप्तुं यत्र शक्यं फलं तत्र लुब्धानामीहितं प्रदत्ते ।

(10) अभङ्ग इति । अर्थश्लेषतयोद्भटस्य यस्सम्मतः । न न्विति । न ह्यभङ्गत्वमात्रमर्थालङ्कारताहेतुः किन्त्वन्वयव्यतिरेकौ । अर्थश्लेषस्य तर्हि को विषय इत्याह—स्तोकेनेति ।

३२६ (11) सह कलकलेन वर्तते यत्, सकलाः कला विद्यन्ते यत्र ।

३२७ (12) इहापीति । शब्दालङ्कारप्रकरणे । एतेन शब्दमात्रसाम्येऽप्युपमात्वं सिद्धम् । शून्य इति । चारुत्वादिधर्माप्रयोगे उपमा तत्प्रयोगे श्लेष इति परस्याशयः । ननु यदि पूर्णोपमायाः निर्विषयत्वभिया भवद्भिः शब्दसाम्येऽप्युपमात्वं स्मृतं तर्हि श्लेषस्य निर्विषयतेत्याह–देवेति ।

३२८ (13) न चेति । यथा विरोधाभासो विरोधो न तथा श्लेषाभासः श्लेष इत्यर्थः ।

३२९ (14) भामहोक्तैकदेशविवर्तिरूपकस्य मम्मटमते परंपरितसंज्ञा ॥ अत्र वर्णनीयस्य राज्ञो मुक्तामणित्वरूपणान्यथानुपपत्त्या वंशस्य गोत्रस्य वेणुत्वरूपणं साक्षादनुक्तमपि श्लेषबलादवगम्यत इत्येकदेशविवर्तित्वम् । सद्वंशेत्यत्रैकदेशविवर्तिरूपकम् ।

## सोमेश्वर

पृ.

२४६ (15) शब्दश्लेष इति । य एवेति, शब्दोऽर्थो वा । तत्रैवेति शब्देऽर्थे वा । 'वैचित्र्यम्' इत्यत्र 'स्वयं च पल्लवाताम्रा' इत्यादावपि शब्द एव कविप्रतिभासंरम्भगोचर इति शब्दालंकारतैव । न चार्थमुखप्रेक्षित्वमेव शब्दानामर्थालंकारनिबन्धनमित्याह-।

(16) यद्यपि लिप्यक्षराणां खड्गादिसंनिविष्टत्वं, तथापि श्रोत्राकाशसमवेतवर्णात्मकशब्दाभेदेन तेषां लोके प्रतीतेर्वाचकशब्दालंकारत्वम् ।

२४७ (17) तथा हि द्राढिकान्तरे साधारणो मा-शब्दः । तस्य दक्षिणतोऽधः क्रमेण वर्णाश्चतुर्दश न्यस्येत् । ततः शिखायां साधारणः सा-शब्दः । ऊर्ध्वक्रमेण वामतश्चतुर्दशैव यावन्मा-शब्दः साधारणः । एतत् फलम् ॥ तस्यैव मा-शब्दस्य दक्षिणपार्श्वे निःसरणक्रमेण वामतश्च प्रवेशक्रमेण वर्णाः सप्त सप्त । एषा द्राढिका । ततो मा-शब्दाद् ऊर्ध्वक्रमेण गण्डिकायां कार्या वर्णत्रयी । उपरि मा-शब्दः साधारणः । तस्य दक्षिणतो वामतश्च तथैव चत्वारो वर्णाः । एतच्च कुलकम् । ततस्तस्य मा-शब्दस्य उपरि वर्णद्वयम् । एतद् मस्तकम् । सा-मा-मा-शब्दा द्विपञ्चकृत्वो द्विरावृत्ताः ॥

२४७ (18) एष मुरजबन्धः । तथा हि पादचतुष्टयेन पङ्क्तिचतुष्टये कृते प्रथमादिपादेभ्यः प्रथमपादाद्यक्षराणि चत्वारि, चतुर्थादि-

## माणिक्यचन्द्र

पृ.

३३० (15) शब्दश्लेष इति । य एवेति शब्दोऽर्थो वा । सैवेति । विचित्रता । एतेन स्वयं चेत्यादौ शब्द एव कविप्रतिभासंरम्भगोचर इति परमतेऽपि शब्दश्लेपना न त्वर्थश्लेपनेत्युक्तम् ।

३३१ (16) लिपयः । तासामेव खड्गाद्याकारोल्लासनासम्भवात्; लिपीनां च श्रोत्राकाशसमवेतवर्णात्मकशब्दाभेदेन प्रतीतेरत्र वाचकशब्दालङ्कारता न लिप्यलङ्कारता ।

३३१-३३२ (17) स्थापना यथा— द्राढिकान्तरे साधारणो माशब्दः, तस्य दक्षिणतोऽधःक्रमेण वर्णाश्चतुर्दश । शिखायां साधारणः साशब्दः । ऊर्ध्वक्रमेण वामतस्तावन्त एव यावन्माशब्दः साधारण एव तत्फलम् । तस्यैव माशब्दस्य दक्षिणतो निस्सरणक्रमेण वामतश्च प्रवेशक्रमेण वर्णास्सप्त सप्त । एषा द्राढिका । ततो माशब्दादूर्ध्वक्रमेण गण्डिकायां वर्णत्रयमुपरि माशब्दः साधारणः । तस्य दक्षिणतो वामतश्च तथैव चत्वारश्चत्वारो वर्णाः । एतच्च कुलकम् । ततस्तस्य माशब्दस्योपरि वर्णद्वयमेतन्मस्तकम् । सामामाशब्दाः द्विः पञ्चकृत्वो द्विरावृत्ताः ॥

३३२-३३३ (18) स्थापना यथा—पादचतुष्टयेन पङ्क्तिचतुष्टये कृते प्रथमादिपादेभ्यः प्रथमाद्यक्षराणि चत्वारि चतुर्थादिपादेभ्यः पञ्च-

## सोमेश्वर

पृ.

२४७ (18) पादेभ्यः पञ्चमादीनि चत्वारि गृहीत्वा प्रथमपादः । द्वितीयपादाद् आद्याक्षरं, द्वितीयतृतीयपादाभ्यां चतुर्थपञ्चमाक्षरे, चतुर्थपादात् तृतीयद्वितीये, तृतीयात् पादात् प्रथमं चाक्षरं गृहीत्वा द्वितीयपादः। द्वितीयाद् अष्टमं, प्रथमात् सप्तमषष्ठे, द्वितीयतृतीयाभ्यां पञ्चमं, चतुर्थात् षष्ठसप्तमे, तृतीयाद् अष्टमं गृहीत्वा तृतीयपादः। चतुर्थात् प्रथमं, तृतीयाद् द्वितीयं, द्वितीयात् तृतीयं, प्रथमात् चतुर्थपञ्चमे, पुनर्द्वितीयात् षष्ठं, तृतीयात् सप्तमं चतुर्थाद् अष्टमं च गृहीत्वा चतुर्थः पादः ॥

२४८ (19) एषोऽष्टदलपद्मः । तथा भाशब्दः कर्णिकास्थाने, ततोऽक्षरद्वयेनैकं दिग्दलं निर्गमप्रवेशाभ्यां भा-शब्दं यावत् । ततो, ऽक्षरद्वयेन विदिग्दलं निर्गमेण तावतैव दिग्दलं प्रवेशेन भाशब्दं यावत् । पुनर्भा-शब्दो निर्गमेण च तदेवाक्षरद्वयमित्यादिना क्रमेण दलाष्टकमुत्पाद्यम् । एवं दिग्दलानि निर्गमप्रवेशाभ्यां उत्पाद्यानि, विदिग्दलानि तु प्रवेशेनैवेति दिग्दलवर्णानां द्वि-भाशब्दस्य चाष्टकृत्व आवृत्तिः प्रस्तारे ॥

२४८ (20) तत्र हि प्रथमादिपादाद्यक्षराणि चतुर्थतृतीयद्वितीयप्रथमपदाष्टमाक्षराणि च प्रथमाः प्रथमपादः । प्रथमादिपादद्वितीयाक्षराणि च चतुर्थादिपादसप्तमाक्षराणि च द्वितीयपादः । एवं तृतीयषष्ठाक्षरैस्तृतीयः पादः चतुर्थपञ्चमैश्चतुर्थः

## माणिक्यचन्द्र

पृ.

३३२-३३३ (18) मादीनि च चत्वारि गृहीत्वा प्रथमः पादः । द्वितीयात्प्रथमं प्रथमाद् द्वितीयतृतीये द्वितीयतृतीयाभ्यां चतुर्थे चतुर्थातृतीयद्वितीये तृतीयात्पादात् प्रथममक्षरं गृहीत्वा द्वितीयः पादः । द्वितीयादष्टमं प्रथमात्सप्तमषष्ठे द्वितीयतृतीयाभ्यां पञ्चमे चतुर्थात् षष्ठसप्तमे तृतीयादष्टमं च गृहीत्वा तृतीयः पादः । चतुर्थादिभ्यः प्रथमादीनि प्रथमादिभ्यः पञ्चमादीनि पादेभ्योऽक्षराणि गृहीत्वा चतुर्थः पादः ।

३३३ (19) स्थापना यथा—भाशब्दः कर्णिकास्थाने । ततोऽक्षरद्वयेनैकं दिग्दलं निस्सरणक्रमेण विदिग्दलं चाक्षरद्वयेन प्रवेशक्रमेण । ततः स एव भाशब्दस्ततोऽक्षरद्वयेन दिग्दलं निर्गमप्रवेशाभ्यां भाशब्दं यावत् । ततोऽक्षरद्वयेन विदिग्दलं निर्गमेण तावतैव दिग्दलं प्रवेशेन भाशब्दं यावत् । पुनर्भाशब्दो निर्गमेण च तावदक्षरद्वयमित्यादिना क्रमेण दलाष्टकमुत्पाद्यमिति दिग्दलवर्णानां द्विः भाशब्दस्य चाष्टकृत्व आवृत्तिः ।

३३४ (20) तत्र हि प्रथमादिपादानां प्रथमैः चतुर्थतृतीयद्वितीयप्रथमपादानां अष्टमैश्चाक्षरैः प्रथमपादः । एवं द्वितीयसप्तमैः तृतीयषष्ठैश्चतुर्थपञ्चमैश्च द्वितीयतृतीयचतुर्थपादाः । इह च सर्वत्र तदेवोपलभ्यत इत्यर्थभ्रमस्याप्यवस्थानात् सर्वतोभद्रम् ।

| पृ. | सोमेश्वर | पृ. | माणिक्यचन्द्र |
|---|---|---|---|
| २४८ (20) | पादः । इह च सर्वं [त] दैव उपलभ्यत इति अर्धभ्रमस्याप्यवस्थानात् सर्वतोभद्रम् । | | |
| २४९ (21) | अन्ये इति, मुशलधनुर्बाणशक्तिहलशूलस्वस्तिकनागपाशचक्रादयः । स्वरव्यञ्जनस्थानगतिनियमेऽन्येऽपि चित्रप्रकाराः संभवन्ति । | ३३३-३३४ (21) | खड्गादित्यादिशब्दान्मुसलधनुर्बाणचक्रशक्तिशूलहलस्वस्तिकादयः । तथैकद्वित्र्यादिव्यञ्जनस्थानपादार्धश्लोकगतप्रत्यागताद्यश्चित्रभेदा ज्ञेयाः । |
| २५० (22) | वर्णच्युतं यथा— सितनृशिरःस्रजा [च] रविमौलिशिरोमणिभूषणैस्तया शिखिरुचिरार्धदृक् पृथुललाटतटे तिलकक्रिया च सा । स्फुटविकटाट्टहासललितं वदनं स्मितपेशलं च तद् अभिनवमीश्वरो वहति वेपमहो तुहिनाद्रिजार्धयुक् ॥ अत्र गौरीश्वरवर्णने सिद्धिच्छन्दसि प्रतिपादमाद्याक्षरद्वयपातेऽन्त्याक्षरसप्तकच्युतौ चेश्वररूपवर्णनमेव प्रमिताक्षरावृत्तेन, यदि वा आद्याक्षरसप्तकच्युतौ अन्त्याक्षरद्वयपाते च गौरीवर्णनं द्रुतविलम्बितवृत्तेन ॥ | ३३५-३५ (22) | स्वं वर्णच्युतं यथा— नृपदितिजामरप्रभुनताङ्घ्रियुगो जलदद्युतिर्विभुः, पृथुभुजगाधिपस्फुटफटासुभगः कमठारिजित्तथा । शिवसुखसंपदव्ययविलासगृहं निखिलैनसां हरो, घनविधुता वनीं हरतु सकलः कलिलावनीं जिनः ॥ अत्र श्रीपार्श्ववर्णने सिद्धिच्छन्दसि प्रतिपादमाद्याक्षरद्वयस्यान्त्याक्षरसप्तकस्य च च्युतौ प्रमिताक्षरावृत्तेन, तथाऽऽद्याक्षरसप्तकस्यान्त्याक्षरद्वयस्य च्युतौ द्रुतविलम्बितवृत्तेन तस्यैव वर्णनम् । |
| २५१ (23) | आमुखे इति, न पुनः परमार्थतः पर्यवसानेऽन्यार्थत्वमित्यर्थः ॥ | ३३५ | आमुख इति । न तु परमार्थतः । एतेन पर्यवसानान्यथात्वं लब्धम् ॥ |

# उल्लास १०

## सोमेश्वर

पृ.

२५३ (1) उपमैव प्रकारवैचित्र्येण अनेकालंकारबीजभूतेति प्रथमनिर्दिष्टः [ष्टा]॥

२५३-५४ (2) उप समीपे मीयते क्षिप्यते स्वसादृश्यप्रापणाद् उपमेयं येन तत् प्रसिद्धम् उपमानम् । यत्तु तेन समीपे क्षिप्यते सौन्दर्यादिगुणयोगित्वेन तत्र प्रकरणेऽप्रसिद्धं वदनादि तद् उपमेयम् । 'इन्दुमुखी' इत्यादौ प्रसिद्धं चन्द्रादि उपमानं, अप्रसिद्धं तु मुखादि उपमेयम् ॥ ननु च—

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥

इत्यादौ कामिनीगण्डादेरप्रसिद्धस्याप्युपमानत्वं, चन्द्रादेश्च उपमेयत्वं दृश्यते । सत्यम्, अत्रापि कामयते प्रियमिति यौगिकत्वाश्रयेण कामिनीशब्दात् प्रतीयमानहृदयस्थितदुर्लभमनोहारिप्रियतमाया गण्डश्चन्द्रादपि अधिकचमत्कारितया प्राधान्येन प्रसिद्ध इति कविविवक्षावशादेव प्रसिद्ध्यप्रसिद्धी अङ्गीक्रियेते । येऽपि प्राकरणिकमुपमेयं, अप्राकरणिकमुपमानमिति आद्रियन्ते तैरपि कविप्रसिद्धिरङ्गीकार्यैव । तेन सत्त्वज्ञेयत्वप्रमेयत्वादिसाधर्म्ये नोपमा । तथा 'कुम्भ इव मुखम्' इत्यादि शृङ्गारादौ च । हास्यादौ तु न दोषः । कार्यकारणादिकयोः साधर्म्यस्य असंभवाद् उपमानोपमेययोरेव साधर्म्ये भवतीति तयोरेव समानधर्मेण संबन्धे उपमा ।

## माणिक्यचन्द्र

पृ.

३३८ (1) तत्रापि प्रकारवैचित्र्येणानेकालङ्कारबीजमिति पूर्वमुपमोच्यते ।

(2) उप समीपे मीयते क्षिप्यते सर्वसादृश्यप्रापणादुपमेयं येन तदुपमानं, तथा तेन यत्तु समीपे क्षिप्यते गुणद्वारेण तदुपमेयं, हृद्यतया कविना यदुत्कृष्यते तदुपमानम्, अन्यदुपमेयं, न तु प्रसिद्धमप्रकृतं चोपमानमन्यदुपमेयम् । एवं हि—

"ततः कुमुदनाथेन कामिनीगण्डपाण्डुना" इत्यादौ चन्द्रादेः प्रसिद्धस्योपमेयत्वं गण्डादेरप्रसिद्धस्योपमानत्वं न स्यात् । प्रकृताप्रकृतत्वेपि कविविवक्षैवाङ्गीकार्या । चन्द्रगण्डयोरुपमानोपमेयत्वप्रसिद्धौ सत्यामपि प्रसिद्धिविपर्यासेनौपम्यस्य कल्पितत्वाद्विपर्यासोपमा ।

## सोमेश्वर

पृ

२५५ (3) उपमानादिचतुष्टयं यत्र प्रयुज्यते सा पूर्णोपमा।

२५५-५६ (4) तथैव अयं यथा-इवादि रुपमानोपमेययोरेकतरस्मिन्नपि अविश्रान्तः श्रौतेन रूपेणोभयाधारमुपमानोपमेयभावं द्योतयतीति श्रौती। तत्सद्भावे, यथा-इव-वा-सद्भावे। तथैवेति, 'श्रौती'त्यर्थः। इवार्थे वतेर्विहितत्वाद् इव-शब्दवच्छ्रौतेन रूपेणोभयानुयायितयोपमानोपमेयत्वावगतिः। 'तेन' इति चन्द्रेण तुल्यं मुखम्। 'तद्' इति चन्द्रबिम्बं तुल्यं मुखस्य॥ 'इदं च' इति चन्द्रबिम्बं च मुखं च तुल्यम्। साम्यपर्यालोचनयेति। सममेव साम्यं साधारणो धर्मः। तुल्यता द्विष्ठरूपं सादृश्यम्। न तु तुल्यादिशब्दादेव साम्यप्रतीतिः, अपि तु अर्थात्, तुल्यादीनां पदानामुपमानोपमेययोरेकतरत्रैव विश्रान्तेः, अन्यत्र तु तद्गतसादृश्यपर्यालोचनया तत्संबन्धित्वावगतिः।

२५७ (5) 'सुरतरुणा सदृश' इति सदृश-शब्देनोपमेये विश्रान्तेन उपमेयगतं सादृश्यं स्वकण्ठेनाभिहितम्। उपमाने च तस्यार्थात् प्रतिपत्तिः, उपमेयवर्तिसादृश्यविचारेण उपमानोपमेयत्वावगतेः। बहुव्रीहौ तु उपमाने विश्रान्तेरुपमानगतसादृश्यपर्यालोचनया उपमेयस्य उपमेयत्वावगतिः॥

## माणिक्यचन्द्र

पृ.

३३९ (3) उपमानमुपमेयं साधारणधर्म उपमाप्रतिपादकश्च यत्र स्युः सा पूर्णा।

३४०-४१ (4) तथैवायमिवादिरुपमानोपमेययोरेकत्राप्यविश्रान्तः श्रुत्या द्विष्ठं उपमानोपमेयभावं वक्तीति। तत्सद्भावे यथेवादिभावे। श्रौती। तथैवेति। श्रौतीत्यर्थः। इवार्थे विहितो वतिरिववत् ज्ञेयः। तेनेति। चन्द्रेण। तत्तुल्यमिति। चन्द्रबिम्बं तुल्यं मुखस्य। इदं चेति। मुखं च चन्द्रबिम्बं च तुल्यम्। उभयत्रापीति। क्रमेणेति शेषः। पूर्वस्योस्त्वेकत्रैवेति भावः तुल्यादिति। तुल्यप्रकारशब्दानाम्। साम्येति। सममेव साम्यम्। समानो धर्मः। द्विष्ठरूपं सादृश्यं तुल्यता। अयं भावः— उपमानोपमेययोः साम्यप्रतीतिर्न तुल्यादिशब्दादेव, किन्त्वर्थात्, तुल्यादिपदानामेकतरत्रैव विश्रान्तेः। अन्यत्र तु साम्यालोचनया सादृश्यप्रतीतिः॥

३४३ (5) अत्र सुरतरुणा सदृश इति सदृशशब्द उपमेयविश्रान्तस्तद्गतं सादृश्यं साक्षाद्ब्रूते। अन्यत्र तु सादृश्यं अर्थात्प्रतीयते, बहुव्रीहौ तूपमाने सदृशशब्दो विश्राम्यति। ततस्तत्र सादृश्यं साक्षादपरत्र तु अर्थात्। इयं समासे आर्थी पूर्णोपमा॥

## सोमेश्वर

पृ.

२५७ (6) तद्धिते श्रौती पूर्णा, यथा-'गाम्भीर्येति । भुजंगवद् 'इत्यत्र' तत्र तस्येव इत्यनेन वतेस्तद्धितस्य विहितत्वात् श्रौती । भुजंगः कामुकः, स चात्र अब्धिः । अम्बररत्नं सूर्यः । तथा 'सूर्य' उपमानं, 'स' इति उपमेयः, 'दुरालोकत्वं' साधारणो धर्मः । अम्बररत्नेन तुल्यः । 'तेन तुल्यं क्रिया चेत् वतिः' इत्यनेन क्रियातुल्यत्वे विहितो वतिरुपमेये शाब्देन वृत्तेन विश्रान्तस्तुल्यत्वपर्यालोचनया उपमानस्य उपमानत्वं गमयतीति ।

२५८ (7) स्फुटं चेत् प्रतीयमानं तदा ध्वनिव्यवहारः, अथ अस्फुटं तदा गुणीभूतव्यङ्ग्यव्यवहार इत्याशयेनाह-स्वाधीनेति । अलंकारान्तरं चेति । तद्धि अनुप्रासादिश्लिष्टतरमपि काव्ये यदि अव्यभिचारितयैव गण्यते, तदा तेन सहोपमादीनां संकरसंसृष्टी स्यातामिति केवलतयैव एषां विनावकल्पेत ॥ तदिति । स चास्फुटतरो रसादिरर्थस्तथा 'अलंकारान्तरम्' इति नपुंसकैकशेषः । अस्फुटश्च रसादिर्गुणीभूतविषय इति अस्फुटतरोऽत्र गृह्यते, इति 'संस्पर्श-पदेनात्र ध्वनितम् । तद्रहितत्वेनेति रसाद्यलंकारान्तराभ्यां विना वैरस्यं वहन्तीति न विरोधः ॥ लुप्तामाह-तद्वदिति । पूर्णोपमावद् लुप्तोपमापि वाक्यसमासयोः श्रौत्यार्थी चेति द्विद्विभेदाः तद्धिते तु आर्थ्येव, न श्रौती ।

## माणिक्यचन्द्र

पृ.

३४३ (6) गाम्भीर्येति । तद्धिते श्रौती पूर्णेयमिति योगः भुजङ्गवदित्यत्र इवार्थे वतिः, ततः । श्रौतीत्वं । भुजङ्गः कामी । स चार्थात्समुद्रः । अम्बररत्नं रविस्तेन तुल्यः, तुल्यार्थे वतिः । स चोपमेये साक्षात् विश्रान्तः, उपमाने तु साम्यपर्यालोचनयोपमानताप्रतीतिरितीयं तद्धिते पूर्णाऽऽर्थी ॥

३४३-३४४ (7) स्वाधीनेति । अयं भावः-प्रतीयमानं चेद्व्यक्तं तदा ध्वनिव्यवहारः, अथास्फुटं तदा गुणीभूत-व्यङ्ग्यव्यवहारः ॥ अलङ्कारान्तरं चेति । तद्ध्यनुप्रासादि श्लिष्टतरमपि काव्ये यद्यव्यभिचारितयैव गण्येत, तदा तेन सहोपमादीनां सङ्करसंसृष्टी स्यातामिति केवलतयैवैषां विषयो नावकल्पेत । तदिति । स चास्फुटतरो रसादिरर्थः । तच्चालङ्कारान्तरमिति नपुंसकैकशेषः । संस्पर्शपदादत्र रसादिरस्फुटतरो ग्राह्यः । अस्फुटातिस्फुटस्य तु गुणीभूतव्यङ्ग्यता ॥ तद्रहितत्वेनेति । रसाद्यलङ्कारान्तररहितत्वेन ।

## सोमेश्वर

पृ.

२४९ (8) समासे आर्थी यथा- 'अमृतोपमा' इति । अत्र 'माधुर्यादि'-धर्मलोपः ॥ तद्धिते आर्थी, यथा— 'विषकल्पम्' इति । 'यदि वेत्सि तद् जीवसि' इति संबन्धः । अत्र दारुणधर्मलोप इवार्थश्च कल्पपप्रत्ययेन साक्षाद् अभिहितः । 'ईषद् अपरिसमाप्तं विषम्' इति वचनवृत्त्या सामानाधिकरण्यरूपया यद्यपि रूपकच्छायां भजते, तथापि प्रातीतिकेन रूपेण उपमैव । तथा हि अत्र 'विषसदृशं मनः' इत्ययमर्थः प्रतीयते, न तु 'ईषद् अपरिसमाप्त विषमेव' इति ईषदपरिसमाप्तिविशिष्टे प्रकृत्यर्थसदृशेऽर्थे कल्पवादीनां स्मरणात् ।

२६० (9) अत्र यद्यपि सदृशशब्दाभिधेयस्य उत्कृष्टतरगुणत्वेन अप्राप्यताप्रतिपादनाद् उपमानत्वं बलाद् आयातं, तथापि तस्य साक्षाद् अनिर्देशाद् उपमानस्य लोपः ।

२६१ (10) सदृक्षशब्दाभिधेयस्य उत्कृष्टतरगुणत्वप्रतिपादनाद् बलाद् आगतस्य उपमानस्य साक्षाद् अनिर्देशाद् उपमानस्यैव लोपः।

२६२ (11) विलासाय विलब्धो दत्तो विग्रहो यया । विशरारितं विभिन्नम् । 'स्मरशरविशरांचित' इति पाठान्तरम् । 'मृगस्य नयने' इति प्रथमं तत्पुरुषः, ततो 'मृगनयने इव नयने यस्याः' इति सप्तम्युपमानोपमानपूर्वस्य समास उत्तरपदलोपश्चेत्यत्र गुणद्योतकोपमानानां त्रयाणां लोपः । यदा तु मृगशब्द एव लक्षणया मृगनयन-

## माणिक्यचन्द्र

पृ.

३४५-४६ (8) समासे आर्थी यथा—अमृतोपमेति । अत्र माधुर्यादिलोपः । तद्धिते आर्थी यथा—विषकल्पं । यदि वेत्सि तज्जीवसीत्यन्वयः । अत्र दारुणधर्मलोपः । ईषदपरिसमाप्तं विषं मन इत्युक्त्या आमुखे रूपकावभासः । निर्वाहे तु विषसदृशं मन इति प्रतीत्या प्रातीतिकेन रूपेणोपमैव । ईषदपरिसमाप्तिविशिष्टे प्रकृत्यर्थसदृशेऽर्थे कल्पबादीनां स्मरणात् । ईषदपरिसमाप्तं विषं विषकल्पशब्देनोच्यते ।

३४७ (9) अत्र सदृशशब्दवाच्यस्योत्कृष्टत्वेन बलादुपमानत्वं तच्च सरिसमिति विशेषणेनाक्षिप्यते, नात्र साक्षात्प्रतीयते इत्युपमानानुपादानं ।

३४९ (10) सदृक्षशब्दवाच्यस्योत्कृष्टगुणत्वेन बलादुपमानत्वं इत्युपमानस्यैव लोपः ।

३५० (11) विलासाय विलब्धो दत्तो विग्रहो यया सा । तथा मृगनयने इव नयने यस्या इति 'सप्तम्युपमान' इत्यादिनोपमानपूर्वस्य समासः उत्तरपदलोपश्च। अत्र धर्मस्येवादेरुपमानस्य च लोपः । यदा मृगशब्द एव लक्षणया मृगनयनवृत्तिः । तदा मृग एव नयने यस्या इति रूपकसमासस्यैव विषयः । न तूपमासमासस्य ।

## सोमेश्वर

पृ.

२६२ (11) वृत्तिः, तदा मृग एव नयने यस्या इति रूपकसमासस्यैष विषयः, न त्वस्य उपमासमासेति।

२६४ (12) 'विलासायुधः कामः, लासः क्रीडनम्।' अत्र 'सैव नितम्बिनीव' इति 'तद्विलासा इव' इत्येतच्च भेदाभावाद् उपमानतया विश्रान्तिमलभमानमन्यव्यावृत्तौ लक्षणयावतिष्ठते।

(13) अत एवान्यधर्माणां स्वधर्मिभूताद् वस्तुन उत्कलितानां रसभावाद्यनुगुणतया वस्त्वन्तराध्यस्तत्वेन लब्धप्रकर्षाणामीक्षणम् उत्प्रेक्षा। सा च मन्ये-प्रभृतिभिर्द्योत्यते।

२६६ (14) अकालसंध्यामिव धातुमत्ताम्। आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्।
सुजातपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव॥
अचिराभामिव [च]घनां ज्योत्स्नामिव कुमुदबन्धुना विकलाम्।
रतिमिव मन्मथरहितां श्रियमिव हरिवक्षसः पतिताम्॥
स्थितः पृथिव्या इव मानदण्डः। हिरण्मयी साऽऽस लतेव जंगमा॥
च्युता दिवः स्थास्नुरिवाचिरप्रभा॥ बालेन्दुवक्राण्यविकाशभावाद् बभुः पलासान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम्॥
इत्यादि उत्प्रेक्षैव। धातुमत्ता-

## माणिक्यचन्द्र

पृ.

३५३ (12) विलासायुधः कामः, लासः क्रीडा, अत्र नितम्बिनी नितम्बिनी वेति, विलासा विलासा इवेति भेदाभावादुपमानतयाऽनुपपद्यमानमन्यव्यावृत्तौ लक्षणयाऽवतिष्ठते।

३५४ (13) अन्यधर्माणां स्वधर्मिभूताद्वस्तुन उत्कलितानां रसभावाद्यभिव्यक्त्यनुगुणतया वस्त्वन्तराध्यस्तत्वेन लब्धप्रकर्षाणामीक्षणमुत्प्रेक्षा। तस्याश्च मन्ये शङ्के ध्रुवमिवाद्या व्यञ्जकाः।

३५५ (14) "अकालसन्ध्यामिव धातुमत्ताम्"
स्थितः पृथिव्या इव मानदण्डः"
"भूगतामिव कौमुदीम्"
"रम्भामिव भुवं गताम्"
इत्यादि तूत्प्रेक्षैव। धातुमत्तादेर्हि प्रत्यक्षेणैवाकालसन्ध्यादिसादृश्यमुपलभ्याकाले सन्ध्या न स्यादित्यसम्भाव्यवस्त्वध्यवसायस्य सम्भावना क्रियते अकालसन्ध्यामिवेति। प्रत्यक्षोपलम्भे च न युक्त्यन्तराकाङ्क्षा। उपमानस्यासम्भवान्न तूपमा।

## सोमेश्वर

पृ.

२६६ (14) दीनां हि प्रत्यक्षत एव अकालसंध्यादिसादृश्यमुपलभ्य अकाले संध्या न भवतीति असंभाव्यमानवस्त्वध्यवसायस्य संभावना क्रियते। 'अकालसंध्यामिव' इति प्रत्यक्षोपलब्धौ च न युक्त्यन्तरं मार्गणीयम्, न तु उपमा, उपमानस्य असंभवात्।

२६६-६७ (15) न हि भवति 'भारं वहतीव पुंगवः', 'पयो ददातीव स्त्रीग वी' इत्युत्प्रेक्षा।

२६८ (16) अत्र 'स खलु तुरगैः' इत्यादिवच्छेदकं किमपि नोक्तं, 'चन्द्रो ह्येवंविधः' इत्यादेरभणनात्। 'नामितं नु गगनं स्थगितं नु' अत्र उत्प्रेक्षाश्रयेण संदेहः, तथा हि तिमिरकर्तृकायां शैलगगनादिव्याप्तौ रञ्जितत्वमुत्प्रेक्षितं, गगनानमितत्वाद्युत्प्रेक्षान्तरसंभवात् संदेहमागतम्। अन्ये तु 'नुशब्दः संभावनाद्योतक इत्युत्प्रेक्षैवेत्याहुः॥

(17) अभेदप्राधान्ये त्वाह-तद्रूपकमिति। रूपयति एकतां नयतीति रूपकम्।

२६८ (18) तथा मुखं चन्द्र इत्यादिरूपके चन्द्रेण स्वगुणा लक्ष्यन्ते। तैर्मुखगुणाः तैरपि मुखम्। ततश्च सामानाधिकरण्यं मुखचन्द्रयोर्गुणद्वारेण ताद्रूप्यादिप्रतीत्योपपद्यते। अत एव च भेदेऽप्यभेदप्रतीतिः॥

२६९ (19) 'चन्द्र एव मुद्राकपालम्'॥ अत्र पादत्रयमिति। समस्त-

## माणिक्यचन्द्र

पृ.

३५६ (15) "भारं वहतीव पुंगवः" "पयो ददातीव स्त्रीगवी" इत्यादौ तु ह्यन्वाभावान्नोत्प्रेक्षा।

३५८ (16) अत्र च स खलु तुरगैरित्यादिवन्न भेदोक्तिः। चन्द्रादयो ह्येवंविधा इत्यनुक्तेः। उत्तरार्धेन सन्देहनिर्वाहाच्च शुद्धत्वम्। तथा—
"रञ्जिता नु विविधास्तरुशैला नामितं तु (? नु) गगनं स्थगितं नु" अत्र ध्वान्ताद्यैः तर्वादि न व्याप्तं। किन्तु रञ्जितमित्याद्युत्प्रेक्षितं सन्देहद्वारेणेत्युत्प्रेक्षाश्रयेण सन्देहद्योती तु (? नु) शब्दः। अन्ये तु तु (? नु) शब्दः संभावनाद्योतकत्वादुत्प्रेक्षामेवाहेत्याहुः।

(17) रूपयत्येकतां नयतीति रूपकम्। अभेद इति भणनादभेदप्राधान्ये रूपकं स्यादिति लब्धम्।

३५८ (18) तथा मुखं चन्द्र इत्यादि रूपके चन्द्रेण स्वगुणा लक्ष्यन्ते। तैर्मुखगुणाः तैरपि मुखम्। ततश्च सामानाधिकरण्यं मुखचन्द्रयोर्गुणद्वारेण ताद्रूप्यादिप्रतीत्योपपद्यते। अत एव च भेदेऽप्यभेदप्रतीतिः।

३५९ (19) ज्योत्स्नेति। चन्द्र एव मुद्राकपालम्। अत्र पादत्रये समस्त-

## सोमेश्वर

पृ.

२६९ (19) वस्तुविषयस्य उदाहरणमित्यर्थः । चतुर्थपादे तु आरोपपूर्विकापह्नुति[ः]

२७० (20) साङ्गमेतदिति सूत्रम् । न केवलं यत्र तस्यैव रूपणं, अपि तु तदङ्गस्यापि ।

२७०-२७१ (21) 'प्रेमलतिका'मिति । अत्र केवलोऽङ्ग्येव लतालक्षणो रूपितः, न पुनस्तदवयवाः पत्रादय इति शुद्धत्वम् । 'प्रेमैव लतिका' इति मयूरव्यंसकादित्वादेव शब्दलोपी समासः । ननु, व्याघ्रादिद्वारेण इव-शब्दलोपी समासो दृश्यते, लुप्तोपमायां सोऽपि स्यादिति संदेहसंकरः प्राप्नोति । सत्यम् । यत्रान्यतरपरिग्रहे साधकप्रमाणाभावस्तदितरस्य वा परिहारे न स्याद्बाधकं प्रमाणं, तत्रैव उभयप्रसङ्गः, स एव च संदेहसंकरः, इह तु लतायाः सेचनमानुकूल्याद् आरोपितधर्म एवेति रूपकपरिग्रहे साधकमिति न संकरः ।

२७२ (22) ननु, मानसशब्दपरिवृत्तौ पर्यायान्तरे सति नालंकार इति शब्दालंकारत्वं, अवरस्मिस्तु परिवर्तितेऽपि सति न स हीयत इत्यर्थालंकारता । ततश्च शब्दालंकारः परंपरितरूपकं, न तु अर्थालंकार, इत्याशङ्क्याह-यद्यपीति ॥ उक्तमिति शब्दश्लेषे पुनरुक्तवदाभासे च । वक्ष्यत इति संकरालंकारे ॥ एकदेशेति । परंपरितमेव उद्भटादिभिरेकदेशवृत्तीत्युच्यते ।

२७६-७७ (23) द्वयोरप्यर्थयोः प्राकरणिकतया विवक्षितत्वादिति

## माणिक्यचन्द्र

पृ.

३५९ (19) वस्तुविषयं रूपकम् । चतुर्थे पादे त्वपह्नुतिः ।

३६१ (20) साङ्गमेतदिति । न केवलं यत्र तस्यैव रूपणं अपि तु तदङ्गस्यापि ।

(21) प्रेमेति । अत्र लताङ्गिनी (ङ्गी) रूपिता न तु तदङ्गं पत्रादीति शुद्धम् । प्रेमैव लतिकेत्यत्रान्यत्रापि रूपकसमासे मयूरव्यंसकादित्वादेव शब्दलोपः । उपमासमासे तु सर्वत्र व्याघ्रादित्वादिवशब्दलोपः । अत्र तु लतायाः सेचनमानुकूल्यादारोपितधर्म एवेति रूपकस्य साधकं प्रमाणमिति न सन्देहसङ्करः ।

३६३ (22) यद्यपीति । अयं भावः-मानसादीनामन्वयव्यतिरेकाभ्यां अपरावृत्तिसहत्वे हंसादीनां तत्सहत्वे उभयालङ्कारः परम्परितरूपकम् । उक्तमिति । पूर्वं शब्दश्लेषपुनरुक्ताभासयोः । वक्ष्यत इति । सङ्करालङ्कारे । अन्यैरिति । उद्भटाद्यैः परम्परितमेकदेशविवर्तिनाम्नोचे । तथा 'त्वमेव हंस' इत्याद्यारोपणपूर्वको मानसमेव मानसमित्याद्यारोप इत्यन्ये ।

३६८ (23) वक्ष्यमाणार्थसूचाभिप्रायेणोक्तौ न श्लेषः द्वयोरर्थयोः प्रकृतत्वे

## सोमेश्वर

पृ.

२७६-७७ (23) भावः । यत्र तु वक्ष्यमाणोपक्षेप्यर्थनिष्ठमुपक्षेपपराभिधासंस् चकत्वं यथा—यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥— इत्यादौ, तत्र न श्लेषोऽर्थद्वयस्य प्रकृतत्वेनाभिधेयतया वक्तुमनिष्टत्वात्, किं तु अर्थशक्तिमूलो वस्तुध्वनिरेव । तथा हि प्रकृते न्यायवतः पुंसस्तिर्यञ्चोऽपि सहायाः, सूचनीयार्थविषयत्वेन तु राम-सुग्रीवादिवृत्तत्वम् ॥

२७७-७८ (24) वामनोक्ता तु उपमेयस्यानुक्तौ समानवस्तुन्यासः समासोक्तिरप्रस्तुतप्रशंसैव ॥

२८३ (25) 'अकथनीयमेतत् श्रूयमाणं हि निर्वेदाय स्यात् तथापि तु यद्यनुबन्धस्तत् कथयामि । 'वैराग्याद्' इति काका 'दैवहतकम्' इत्यादिना च वैराग्यसूचा । 'साधु विदितम्' इत्युत्तरम् । 'कस्माद्' इति वैराग्ये हेतुप्रश्नः । 'इदं कथ्यते' इत्यादि सनिर्वेदस्मरणोपक्रम[ः] कथं कथमपि निरूप्यतयोत्तरम् । 'वामेन' इति अनुचितेन कुलादिना उपलक्षित इत्यर्थः । अत्र [? अ] चेतनेन वृक्षविशेषेण सहोक्तिप्रत्युक्ती न संभवत इति असंभवति वाच्ये समृद्धासत्पुरुषसहवासिनो निर्धनस्य कस्यचिन्मनस्विनः परिदेवितं प्रतीयमानमध्यारोपेण स्थितं चेतनवृत्तान्तमारोप्य इत्थं कविना वर्णितत्वात् ।

## माणिक्यचन्द्र

पृ.

वक्तुमनिष्टत्वात् किन्तु वस्तुध्वनिरेव । यथा-"यान्ति न्यायप्रवृत्तस्य इति" अत्र प्रकृतत्वेनार्थो न्यायनिष्ठपुंवृत्तिः, सूचाभिप्रायेण तु रामादिवृत्तिः ।

३६९. (24) "उपमेयस्यानुक्तौ समानवस्तुन्यासः समासोक्तिः" इति तु वामनः । तन्मतेऽप्रस्तुतप्रशंसाऽन्यथा ज्ञेया ।

३७७ (25) श्रूयमाणं निर्वेदकृदपि तवानुबन्धात्कथ्यते । कस्मादिति वैराग्यहेतुप्रश्नः । कथ्यत इत्यादि सनिर्वेदस्मरणोपक्रमं कथंकथमपि निरूप्यते । वामेनेति । कुकूलादिनोपलक्षितः । वट इति । फलदानशून्यश्छायामात्रकरणादेव गर्विष्ठः । छायाऽपीति । श्मशानाग्निदग्धपल्लवादिस्तरुविशेषो हि शाखोटकः । मार्गः सतां पन्था अपि । अत्र वृक्षेण सहाचेतनत्वादुक्तिप्रत्युक्त्यसम्भवे तु श्रीमत्पुरुषसेवया खेदवान् दरिद्रमनस्वी कश्चित्पुमान् प्रतीयमानतयाऽध्यारोप्यते ।

## सोमेश्वर

पृ.

२८३-८४ (26) 'रसनाविपर्ययो गजानां शापहेतुतोऽसत्यभाषित्वमपि। चापलमश्रोतव्यश्रवणमपि । मदो गर्वोऽपि । शून्यकरत्वमदातृत्वमपि।' अत्र वाच्येऽर्थे रसनाविपर्ययशून्यकरत्वयोरसेवने हेतुत्वं न संभवतीति अध्यारोपोऽवसेयः । कर्णचापलं तु असेवने हेतुः । मदश्च सेवने प्रतीयमानश्च कुस्वामिसेवकः । एवं च अप्रस्तुतस्य वाच्यत्वे प्रस्तुतस्य गम्यत्वेऽप्रस्तुतप्रशंसा । श्लिष्टविशेषणैः प्रस्तुतस्य वाच्यत्वेऽप्रस्तुतस्य गम्यत्वे तु समासोक्तिः । प्रस्तुताप्रस्तुतयोरपि वाच्यत्वे विशेष्यस्यापि श्लिष्टत्वेऽर्थश्लेषः । एषान्योक्तिरिति अन्ये ।

२८४ (27) बहिरविद्यमानस्यार्थस्य संभावनामात्रेण उपनिबन्धे संबन्धेऽप्यसंबन्धो असंबन्धेऽपि संबन्ध इत्यर्थः । संबन्धेऽप्यसंबन्धः, यथा-'राकायाम्' इति । अत्र पार्वणशशाङ्कस्य निष्कलङ्कत्वं बहिरसंभवदपि कविप्रजापतिना स्वप्रतिमानात् संभवद्रूपतया उक्तम् । इत्थं च प्रकृतस्य मुखस्य उपमानाभावो, नास्त्यन्यत्, किंचिदस्योपमानमिति । अत एव संभाव्यमानार्थनिराचिकीर्षया शङ्काद्योतकश्चेच्छब्दः । आशङ्का ह्यनिश्चितस्वभावे वस्तुनि स्यात् ॥ इयमुत्पाद्योपमेति रुद्रटः, अद्भुतोपमेति दण्डिप्रभृतयः ।
असंबन्धेऽपि संबन्धः, यथा–
पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।

## माणिक्यचन्द्र

पृ.

३७७-७८ (26) सोऽपूर्वे इति। रसनाविपर्ययो गजानां शापजोऽलीकजोऽपि। चापलं खलवचश्श्रवणे साम्मुख्यमपि । शून्यकरत्वमदातृत्वमपि । हेतुरिति। तेन वाच्येऽर्थे प्रतीयमानस्य कस्यापि कुस्वामिसेवकस्याध्यारोपः कार्यः । चापलमसेवने मदश्च सेवने हेतुः। प्रस्तुताप्रस्तुतयोः वाच्यत्वे विशेष्यस्यापि श्लिष्टत्वे अर्थश्लेषः। विशेषणानां श्लिष्टत्वे प्रस्तुतस्य वाच्यत्वे अन्यस्य तु गम्यत्वे समासोक्तिः। अप्रस्तुतस्य वाच्यत्वे प्रस्तुतस्य गम्यत्वेऽप्रस्तुतप्रशंसेति विवेकः।

३७९-८० (27) राकेन्दोर्निर्लक्ष्मत्वस्य बहिरसम्भवेऽपि कविना सम्भवद्रूपतयोक्तावास्यं निरुपममित्यर्थः। एषोत्पाद्योपमेति रुद्रटः। अद्भुतोपमेति दण्डिमुख्याः । अयं सम्बन्धेऽप्यसम्बन्धरूपस्तृतीयः । क्वचिदसम्बन्धे सम्बन्धो यथा—
"पुष्पं प्रवालोपहितम्" इति अत्रासम्बन्धे सम्भावनया सम्बन्धः।

## सोमेश्वर

पृ.

२८४ (27) ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥ अत्र असंबन्धे संभावनया संबन्धः ।

२८५ (28) वस्तुप्रतिवस्तुभावेन तु सामान्य धर्मस्य सकृन्निर्देशे दीपकतुल्ययोगिते ॥ वस्तुशब्दस्य वाक्यार्थवाचित्वे प्रतिवस्तुप्रतिवाक्यार्थमुपमासाम्यं यस्यामिति अन्वर्थः ।

२८६ (29) पुनः-शब्दः पूर्वस्माद् व्यतिरेके । व्यतिरेकश्च बिम्बप्रतिबिम्बभाव एव ।

(30) निश्चयश्च विशेषादेव संभवतीति विशेषरूप एवासौ, तेन यत्र विशेषस्य विशेषेण समर्थनं विम्बप्रतिविम्बभावे सति स दृष्टान्तः । दृष्टान्तस्य हि विशेषरूपतयैव प्रतिविम्बभावः संगच्छते । यत्र तु विशेषस्य सामान्येन समर्थ्यसमर्थकभावः सोऽर्थान्तरन्यास इति विवेकः ।

२८६-८७ (31) 'यथा चन्द्रालोके कुमुदिन्याश्चन्द्रगुणपक्षपातित्वेन कुमुदं विकसति तथा त्वद्दर्शने त्वद्गुणपक्षपातित्वेन तस्या मनः कामाग्निज्वलितमुपशाम्यति ।

२८७ (32) अत्र [वि]शारुतागमनादे[ः] स्थिरताधानादिना वैधर्म्येण प्रतिबिम्बनम् ॥

ननु, साधारणधर्माणां प्रतिविम्बितत्वेन नियतनिष्ठतया कथं साधारणधर्मतेति चेद्, न, वस्तुतो हि तेषां धर्माणामभेद इति साधारणता, शब्दान्तरेण प्रतिपादितत्वात्तु प्रतिबिम्बनमिति न कश्चिद् विरोधः ॥

## माणिक्यचन्द्र

पृ.

३८० (28) वस्तुशब्दस्य वाक्यार्थवाचित्वे प्रतिवाक्यार्थमुपमा साम्यमित्यन्वर्थत्वाश्रयणात् केवलं काव्यसमयात्पर्यायान्तरेण पृथङ्निर्देशः । अयं भावः-सामान्यधर्मस्यवाद्यनुक्तौ सकृन्निर्देशे दीपकतुल्ययोगिते ।

३८१-८२ (29) अत्र पुनश्शब्दः पूर्वस्माद्विशेषकः । विशेषश्च विम्बप्रतिविम्बभाव एव ।

३८२ (30) निश्चयो यत्रेति भणनाद्यत्र विशेषेण विशेषो बिम्बप्रतिबिम्बभावे सति समर्थ्यते स दृष्टान्तः । निश्चयस्य विशेषादेव सम्भवात् विशेषरूपतयैव दृष्टान्ते विम्बप्रतिविम्बभावयोगात् । विशेषस्य सामान्येन समर्थने त्वर्थान्तरन्यासः ।

(31) यथा कुमुदिन्याश्चन्द्रालोके तद्गुणपक्षपातित्वेन कुमुदं विकसति तथा त्वद्दर्शने गुणपक्षपातात्तस्या मन इति सर्वप्रतिविम्बनम् ।

३८२-८३ (32) अत्र विशारुतागमनादीनां स्थिरत्वाधानादिवैधर्म्येण प्रतिविम्बनम् । दृष्टान्ते साधारणधर्माणां वस्तुवृत्त्या ह्यभेद एव । परं शब्दान्तरेणोक्तत्वात् प्रतिबिम्बने भेदाभास इति विम्बने नियतनिष्ठतया तेषां साधारणता न स्यादिति नाशङ्क्यम् ।

## सोमेश्वर

पृ.

२८७ (33) एकत्र स्थितः समानो धर्मः क्रियादिः प्रसङ्गेन अन्यत्रोपकाराद् दीपनाख्याद् दीपसादृश्येन दीपकालंकारः। प्राकरणिकाप्राकरणिकत्वाभ्यां च तेषामर्थानामुपमानोपमेयभावो गम्यमानो न श्रौत इत्युपमातोऽस्य भेदः।

२८८-२८९ (34) क्रियापदस्य हि दीपकत्वे सर्वं काव्यं सालंकारमिति नार्थोऽनेन ग्रन्थेन। सत्यम्। न क्रियापदमात्रं दीपकं, किं तु बहुभिः समानजातीयैः कारकविशेषैरभिसंबध्यमानम्। तस्य चानेकेष्वर्थेषु अभिसंबध्यमानस्यार्थवदन्वयि रूपं यत् तत्साम्यमुच्यते।

(35) एकावली तु पूर्वस्य पूर्वस्योत्तरोत्तरेण उत्कर्षहेतुत्वे स्यादिति भेदः।

२९१ (35a) तथा श्लेषेऽपि द्वादश भेदः। तत्तस्मात् त्रीन् वारान् अष्ट भेदाश्चतुर्विंशतिरित्यर्थः।

२९१-९२ (36) आर्थादौ चतुष्कपञ्चकेऽपि दर्शितदर्शिना उदाहरणैरन्यद् भेदत्रयं द्रष्टव्यमित्यर्थः॥ आर्थेन साम्ये, यथा—'असिमात्रे'ति। अत्रापि उत्कर्षापकर्षहेत्वोर्द्वयोरुक्तिः।

२९२ (37) अत्र उपमेयगतोत्कर्षोपमानगतनिकर्षकारणोपादाने आर्थौपम्ये श्लेषव्यतिरेकस्य प्रथमो भेदः।

२९३ (38) 'मधु कर्तृ तृष्णां जहार, न मुखम्।' अत्र तृष्णाया हरणेऽहरणे च नोपात्तौ हेतुरिति उभयानुपादानाच्चतुर्थोऽयं भेदः श्लेषव्यतिरेकान्त्य-

## माणिक्यचन्द्र

पृ.

३८३ (33) एकत्र स्थितः क्रियादिः समानो धर्मः प्रसङ्गे नान्यत्रोपकाराद्दीपनाख्याद्दीपकम्। अत्र प्रकृताप्रकृतत्वयोर्वास्तवत्वादर्थानामौपम्यं सत्यं परं गम्यं न श्रौतम्। अतो नोपमा।

३८४ (34) तथा क्रियायाः सर्वत्र वाक्ये प्रयोगात्तद्दीपत्वे सर्वं वाक्यं सालङ्कारं स्यादतो न क्रियामात्रं दीपकं, किन्तु भूयोभिस्सजातीयैः कारकैस्सम्बध्यमानं, तस्य चानेकेष्वर्थेषु साधारणतया सम्बध्यमानस्य बलादौपम्यगर्भत्वम्।

(35) एकावली तु पूर्वस्योत्तरोत्तरेणोत्कर्षहेतुत्वे स्यादिति विवेकः।

३८७ (35a) श्लेषेऽपि द्वादशभेदा इत्यर्थः। त्रिरष्टेति। त्रीन् वारान् अष्ट चतुर्विंशतिः।

३८८ (36) आर्थादावपि चतुष्कपञ्चके दर्शितदृष्टान्तान्यत्रिभेदी स्वेनोह्या। आर्थसाम्ये यथा—असीति। अत्राप्युत्कर्षापकर्षहेत्वोर्द्वयोरुक्तिः।

३८९ (37) अयमुपमानगनिकर्षहेत्वनुक्तावार्थौपम्ये श्लेषव्यतिरेकस्य तृतीयभेदः।

३९०-९१ (38) मधु तृष्णां जहार न मुखमिति योगः। अत्र तृष्णाहरणाहरणयोः कारणे नोपात्ते इति द्वयानुक्तिरित्युभयानुक्तौ श्लेषव्यतिरेकान्त्यचतुष्कस्या-

## सोमेश्वर

पृ.

२९३ (38) चतुष्कस्य ॥ शेषं द्वयमूह्यम् ॥ 'एवमन्येष्वपि द्रष्टव्यम्' इति वचनात् प्रतिचतुष्कमेकः कश्चिद् भेदो वक्तुं संमत इति 'हरवद्' इति 'स्वच्छात्मता' इति च उदाहरणद्वयं ग्रन्थकाराभिप्रायेण न भवति।

२९३-९४ (39) यथा—या शैशिरी श्रीस्तपसा मासेनैकेन विश्रुती। तपसा तां सुदीर्घेण दूराद् विदधतीमधः ॥ 'तपो माघमासः, अन्यत्र तु अभ्युदयहेतुः कृच्छ्राचरणम्।' इत्यादय अनुपात्ता अपि सामर्थ्यगम्याः। अत्र 'तपसा' इति श्लिष्टोक्तियोग्यं पदं पृथगुपात्तम्'।

२९४ (40) अत्रापि श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानम् ॥ एवमन्येऽपि एकादश भेदाः ॥ ननु श्लेषव्यतिरेकयोरन्यत्र लब्धसत्ताकत्वात् श्लेषोपकृतत्वे व्यतिरेकस्याङ्गाङ्गिभावे संकरत्वं स्यात्। सत्यम्। श्लेषगर्भीकारेण व्यतिरेकलक्षणमंशमाश्रित्य एवंविधे श्लेषव्यतिरेकापरनामत्वान्न संकरः। ततस्तदनुचरणार्थमेवैष प्रकारो व्यतिरेकप्रकारतया व्यवस्थाप्यते ॥

२९५-९६ (41) हेतुरूपेति। क्रिया हि कार्यं निष्पादयतीति सैव हेतुः। सर्वेषां फलभूतानां क्रियेव अव्यवहितं कारणं, क्रियामुखेन कारणेभ्यः कार्योत्पत्तेः। अन्यैश्च 'क्रियाफलमेव कार्यम्' इति वैयाकरणैरेव अभ्युपग-

## माणिक्यचन्द्र

पृ.

३९०-९१ (38) न्त्यो भेदः। द्विभेदी स्वेनोह्या। एवमन्येष्वपि द्रष्टव्यमित्युक्त्या प्रातिचतुष्कमेकः कश्चिद्भेदो वाच्य इति स्थितेऽपि यद् ग्रन्थकृता हरवदिति स्वच्छात्मतेति दृष्टान्तद्वयमूचे तदेकत्र व्यतिरेकमालात्वमन्यत्रार्थाश्लिष्टत्वं विशेषं ज्ञापयितुम्।

३९१ (39) यथोद्भटकुमारसम्भवे गौरीस्तुतौ।
"या शैशिरी श्रीस्तपसा मासेनैकेन विश्रुता।
तपसा तां सुदीर्घेण दूराद्विदधतीमधः" ॥
तपो माघमासोऽपि। एकेनेति सुदीर्घेणेति हेतुद्वयोक्तिः। अत्र तपसेति श्लिष्टोक्तियोग्यं पदं पृथगूचे।

३९१-९२ (40) अत्रापि श्लिष्टोक्तियोग्यपदस्य पृथग्भावः। अन्येऽपीत्येकादश भेदाः। नन्वत्र श्लेषोपकाराच्चमत्कारी व्यतिरेक इति तयोरङ्गाङ्गिभावे संकरः स्यात्, न, द्वययोगे हि संकरो न चात्र द्वयमस्ति। एवंविधश्लेषस्यैव व्यतिरेकापरनामत्वात्। परं व्यतिरेकरूपमात्रमाश्रित्य व्यतिरेकप्रभेदतया श्लेषव्यतिरेकरूपयोक्तम्।

३९४-९५ (41) हेतुरूपेति। हेतवोऽपि क्रियामुखेन कार्यं कुर्वन्तीति सैवाव्यवहितो हेतुः। कार्यं क्रियायाः फलमिति वैयाकरणा एव मन्यन्ते नान्ये। फलेति। कार्यस्य कविना प्रतिपादनं न तु भवनं, हेतुं

## सोमेश्वर

पृ.

२९५-९६ (41) म्यते, न सर्वैरिति क्रिया-
पदस्थाने कारणग्रहणं कृतम्,
सामान्येन विशेषमनपेक्ष्य
फलप्रकाशनमिति कार्यस्य
कविना प्रतिपादनं, न तु भव-
नकारणमन्तरेण कार्योत्पत्तेर-
संभवाद् ॥ इह कारणान्व-
यव्यतिरेकानुविधानात् का-
र्यस्य कारणमन्तरेण असंभवः ।
यदि तु कथाचिद् भङ्ग्या तथा-
भावोपनिवन्धः, तदा विभा-
वना । सा च भङ्गिः प्रसिद्धतर-
कारणानुपलब्धिः अप्रसिद्धं तु
कारणं वस्तुतोऽस्त्येव । अस्या-
श्च न विरोधरूपत्वं, विरोधे
द्वयोरपि समानवलयोःपरस्पर-
बाधात् । अत्र तु कार्योत्पत्ति-
रेव कारणप्रतिषेधेन बाध्य-
माना प्रतिभाति, न तु कारण-
प्रतिषेधस्य कार्योत्पत्त्यापि
बाधः । कारणप्रतिषेधस्य हि
बाधः प्रतिभासमानोऽपि
ज्ञप्त्यपेक्षो, ज्ञप्तिश्च उत्पत्त्यपे-
क्षया दवीयसी न विभावनां
प्रयोजयति ॥ 'ज्ञप्त्यपेक्ष' इति
यथा हि कार्यमुत्पद्यमानमेव
कारणप्रतिषेधेन बाध्यत इति
भवत्युत्पत्त्यपेक्षस्तत्र बाधस्तथा
नोत्पद्यमान एव कारणप्र-
तिषेधः कार्योत्पत्त्यापि बाध्य-
ते, अपि तु उत्पन्नस्य तस्य
बाधस्तया ज्ञाप्यत इति कारण-
प्रतिषेधबाधो ज्ञप्त्यपेक्ष एव ॥
'ज्ञप्तिश्च' इति कारणप्रतिषेध-
बाधज्ञानं च । 'दवीयसी' इति
पश्चाद्भावित्वेन ॥ भवतु वात्रापि
सामान्येन परस्परं बाधस्तथापि
न विरोधरूपत्वं हेतुफलभावं
विशेषमाश्रित्य प्रवर्तनाद् अस्या-

## माणिक्यचन्द्र

पृ.

३९४-९५ (41) विना, कार्योत्पत्त्यसंभवात् ।
अत्र प्रसिद्धतरहेत्वनुपलब्धेर्हे-
त्वभावः, अप्रसिद्धस्तु हेतुर्व-
स्तुतोऽस्त्येव । अत एव
विशिष्टतया प्रसिद्धतरहेत्वनु-
पलब्धिरूपया कार्यस्य भावना
पर्यालोचना विभावना, हेतुनि-
षेधेन चेहोपाक्रान्तत्वाद्बलवता
कार्यमेव बाध्यत्वेन प्रतीयते न
तु तेन हेतुनिषेध इत्यन्योन्यबा-
धकत्वानुप्राणिताद्विरोधालंका-
राद्भेदः । हेतुनिषेधबाधप्रती-
तिस्तु ज्ञप्त्यपेक्षा ज्ञप्तिस्तूत्पत्त्य-
पेक्षया नासन्नेति न विभावना-
प्रयोजिका । अयं भावः—
यथा कार्यं भवदेव हेतुनिषेधेन
बाध्यत इति भवति तत्र भव-
नापेक्षो बाधः । तथाभवन्नेव
हेतुनिषेधः कार्योद्भवनेनापि न
बाध्यते किन्तु भूतस्य तस्य
बाधः तथा ज्ञाप्यते इति हेतु-
निषेधबाधो ज्ञप्त्यपेक्ष एवेति
ज्ञप्तिर्भवनापेक्षया पश्चाद्भावि-
त्वेनानासन्नेति । यद्वा सामा-
न्येन मिथो बाधे सत्यपि हेतु-
फलभावविशेषेणास्याविरोधा-
द्भेदः ।

## सोमेश्वर

पृ.

२९५-९६(41)–स्तदपवादत्वात् ॥ एवं विशेषोक्तौ कार्यभावेन कारणसत्ता एव बाध्यमानत्वमुन्नेयम् । येन सापि अन्योन्यबाधत्वानुप्राणिताद् विरोधाद् भिद्यते ।

२९६ (42) अत्र कुसुमितलताहननादीनां कारणानामभावेऽपि रुग्धारणादीनि कार्याणि प्रकाशितानि । तत्र विरहित्वलक्षणं निमित्तं गम्यमानम् ॥ उक्तनिमित्ता यथा—असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य । कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥ अत्र द्वितीयपादे मदस्य यद् आसवाख्यं करणं प्रसिद्धं तदभावेऽपि यौवनहेतुकत्वेन उपनिबन्ध उक्तः । 'मदो मत्तता हर्षश्चेति' । मदस्य द्वैविध्येऽपि अभेदाध्यवसायकत्वमिति अतिशयोक्त्यनुप्राणिता विभावना । 'असंभृतं मण्डनम्' इति 'कामस्य पुष्पव्यतिरिक्तमस्त्रम्' इत्यत्र च संभरणस्य पुष्पाणां च मण्डनमस्त्रं च प्रति कारणत्वात् तदभावे विभावना॥ 'एकगुणहानौ विशेषोक्तिरियम्' इति वामनीयाः । 'रूपकमेव अधिरोपितवैशिष्ट्यम्' इति अन्ये । 'आरोप्यमाणस्य मण्डनादेः प्रकृते वयसि संभवात् परिणाम' इति तु अद्यतनाः ॥

२९७ (43) 'स एकः' इति । अत्र तनुहरणे कारणे सत्यपि बलहरणस्य कार्यस्य अनुक्तौ निमित्तमचिन्तनीयमेव । प्रतीत्यगोचरत्वात् । 'अतैलपूराः सुरतप्रदीपाः' इत्यादि तु रूपकम् ।

## माणिक्यचन्द्र

पृ.

३९५ (42) अत्र नलिन्यब्जिनी पद्मिन्याख्या स्त्री च । तथा घातादिहेत्वभावेऽपि रुगादिकार्यमुक्तं, तत्र वियोगित्वं कारणं गम्यमनोऽनुक्तनिमित्तेयम् । उक्तनिमित्ताऽप्येषा यथा— "अनासवाख्यं करणं मदस्य" अत्र यौवनं निमित्तम् । मत्तताहर्षवाचकत्वान्मदस्य द्वैविध्येऽप्यतिशयोक्त्या ह्यभेदः । अतिशयोक्त्यनुप्राणिता चैषा ज्ञया । एकगुणहानौ विशेषोक्तिरित्येके । अरोपितवैशिष्ट्यं रूपकमेवान्ये इमां मन्यन्ते ।

३९६-९७(43) अत्र तनुहरणस्य हेतोः फलं बलहरणं परं नोक्तम् । निमित्तं वा प्रतीत्यगोचरत्वादचिन्त्यम् । "एकगुणहानिकल्पनायां साम्यदाढर्ये विशेषोक्तिः" इति यदन्यैरस्या लक्षणं कृतं साऽस-

## सोमेश्वर

पृ.

(44) संख्योपलक्षितक्रमानतिक्रमेण पदार्थानामन्वयसमाश्रयात् । अन्ये तु इमं क्रमसंज्ञमाहुः ॥ क्रमिकाणामिति बहुवचनमतन्त्रम् । तेन द्वयोरपि अर्थयोर्यथासंख्यम् ।

३०० (45) रुद्रटस्तु 'नित्यमेव द्रव्याश्रितत्वाद् जातेर्न जातिद्रव्ययोर्विरोध' इति नव भेदानाह ।

३०१ (46) [य]न्मार्गणा एव अनर्गलः शातपातः । अम्भोजदलाभिजातः' इति अम्भोजदलप्रख्यो जातः । अत्र दृषद्दृढत्वलक्षणगुणस्य अम्भोजदलस्वरूपद्रव्येण विरोधः ॥
'जडयति शीतलयति व्यामोहयति च । ताप उष्णत्वं खेदश्च' । अत्र जडीकरणतापकरणयोः क्रिययोर्विरोधो वस्तुसौन्दर्येण तदप्राप्तिपर्यवसानेन परिह्रियते ॥

३०१ (47) 'श्लेषगर्भत्वे विरोधप्रतिभोत्पत्तिहेतुः श्लेषः' इति उद्भटः । मतान्तरे तु संकरः, यथा- 'संनिहितबालान्धकारा भास्वन्मूर्तिश्च' इत्यादौ विरोधेन द्वयोरपि श्लिष्टत्वे । एकस्य च श्लिष्टत्वे' कुपितमपि कलत्रवल्लभम्, इत्यादौ विरोध एवेष्यते ।

३०२ (48) वस्तुनो हि सामान्यस्वभावो लौकिकोऽर्थोऽलंकार्यः कविप्रतिभासंरम्भविशेषस्तु लोकोत्तरोऽर्थोऽलंकरणमिति ।

## माणिक्यचन्द्र

पृ.

३९६-९७ (43) न्मते रूपकभेद एव । यथा- "अतैलपूराः सुरतप्रदीपाः" इति ।

(44) सङ्ख्योपलक्षितक्रमानतिक्रमेण पदार्थानामन्वये यथार्थं यथासङ्ख्यं क्रम इति यावत् । क्रमिकाः क्रमवन्तः । बहुवचनमतन्त्रम् । तेन द्वयोरप्यर्थयोः यथासङ्ख्यम् ।

४०० (45) नित्यमेव द्रव्याश्रितत्वाज्जातेर्न जातिद्रव्ययोर्विरोध इति ब्रुवन् रुद्रटो नवभेदं मन्यते ।

४०१-२ (46) यन्मार्गण एवानर्गळः शातः पविः । अत्र दृढत्वरूपगुणदलरूपद्रव्ययोर्विरोधः ।
परीति । जडयति शीतलयति मोहयति च । तापः खेदोऽपि । अत्र जडीकरणतापकरणरूपे क्रिये विरुद्धे वस्तुसौन्दर्येण तदप्राप्तिपर्यवसानेन परिह्रियेते ।

४०२ (47) "कुपितमपि कलत्रवल्लभम्, इत्यादौ श्लेषगर्भसङ्कर इति कश्चित् । उद्भटस्तु विरोधप्रतिभोत्पत्तिहेतुं श्लेषमाह । श्लेषवशादेव लब्धात्मलाभत्वाद्विरोधस्य न श्लेषेण सह संकरः ।

४०३ (48) कविप्रतिभागोचरस्य त्वत एव तन्निमित्तस्यैव वस्तुस्वभावस्योक्तिरलङ्कारः ।

| पृ. | सोमेश्वर | पृ. | माणिक्यचन्द्र |
| --- | --- | --- | --- |
| ३०६ (49) | ‘मृगे’ति। तया हि प्राग्मोहितः किमपि नाज्ञासीत्। ‘सुहृदा’ इति। अकल्याणमित्रं हि तस्यासीत्। अत्राशोभनावपि शोभनावुक्तौ। विना-शब्दमन्तरेणापि विनार्थविवक्षा दृश्यते यथा सहोक्तौ सहार्थविवक्षा। तेन–‘निरर्थकं जन्मगता नलिन्या यया न दृष्टं तुहिनांशुबिम्बम्। उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन॥ इत्यादौ विनोक्तिरेव तुहिनांशुदर्शनं विना नलिनीजन्मनोऽशोभनत्वप्रतीतिः। | ४०६ (49) | मृगेति। तथा हि प्राङ्मोहितः किमपि नाज्ञासीत्। सुहृदेति कूटमित्रं, स तस्यासीत्। विनाशब्दं विनाऽपि विनार्थविवक्षा स्यात् यथा सहोक्तौ सहार्थविवक्षा। तेन— “निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम्। उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन”॥ इत्यादौ विनोक्तिरेव। तुहिनांशुदर्शनं विना नलिनी जन्मनोऽशोभनत्वप्रतीतेः। |
| ३०७ (50) | न चेयं सुन्दरवस्तुस्वभाववर्णनात् स्वभावोक्तिः, तस्या लौकिकवस्तुगतसूक्ष्मधर्मवर्णने सर्वसाधारण्येन हृदयसंवादसंभवात्; इह तु लोकोत्तराणां वस्तूनां स्फुटतया ताटस्थ्येन प्रतीतिः नापि अद्भुतपदार्थदर्शनाद् अतीतानागतप्रत्यक्षत्वप्रतीतेः काव्यलिङ्गमिदं लिङ्गलिङ्गिभावेनाप्रतीतेः॥ | ४०८ (50) | स्वभावोक्तौ कविप्रतिभाविशेषितलौकिकवस्तुस्वभाववर्णने सर्वसाधारण्येन चित्तसंवादसम्भवोऽत्र तु लोकोत्तरवस्तूनां स्फुटत्वेन तटस्थतया प्रतीतिरिति चारुवस्तुस्वभाववर्णनान्तैषा स्वभावोक्तिः। न चेदमद्भुतपदार्थदर्शनाद्भुतभाविप्रत्यक्षत्वप्रतीतौ काव्यलिङ्गम्, लिङ्गलिङ्गिभावेनाऽप्रतीतेः। |
| ३०८ (51) | अत्र पादत्रयार्थोऽनेकवाक्यार्थरूपश्चतुर्थपादार्थहेतुत्वेन उक्तः। अत्र चानुमानसद्भावेऽपि न तेन सह वाक्यार्थीभूतस्य हेतोः संसृष्टिव्यवहारः, उभयोरपि भिन्नदेशत्वाभावात्। अनुमानं तु हेतोरुत्थापकतया उपकारकमिति भवत्यङ्गाङ्गिसंकरः, किं तु हेतुलक्षणमत्रास्तीति एतदभिसंधाय हेतोरिदमुदाहृतम्। अनमनं ह्यपराधद्वयस्य जनकं, तदेव चापराधतया परिणतं, यथा घटकारणं मृद् घटरूपतया परिणमति। | ४०९ (51) | अत्र पादत्रयार्थोऽनेकवाक्यार्थरूपोऽन्त्यपादार्थस्य हेतुः। तथा वपुःप्रादुर्भावादित्युक्त्याऽनुमानमप्यत्रास्ति, परं तेन सह भिन्नदेशत्वाभावाद्वाक्यार्थीभूतस्य हेतोर्न संसृष्टिः, किन्त्वनुमानस्योत्थापकतया वाक्यार्थीभूतहेतुं प्रत्यङ्गभावे सङ्करः। सम्प्रति त्वां नमन्मुक्तः सन् अग्रेऽपि भाविनि काले निस्तनुस्सन्ननतिमानित्यर्थः। यथा घटकारणं मृद्धटरूपेण परिणमति तथाऽपराधद्वयस्य जनकमननमनमपराधतयाऽत्र परिणतम्। |

## सोमेश्वर

पृ.

३०९ (52) व्यङ्ग्यमर्पीति योग्यतया निर्देशः ॥ शब्देनोच्यत इति। भङ्ग्यन्तररचितशब्दैरभिधानम्। तेनेति। यद् भङ्ग्यन्तरेणोच्यते तद् व्यङ्ग्यम् ॥ यथा त्वेकघनरूपतात्मकप्रकारेण व्यङ्ग्यं प्रतीयते, न तथा वक्तुं शक्यते, क्रमभाविविकल्पप्रभवानां शब्दानां तथाभिधानशक्तेरभावाद्।

३१० (53) स्वभावोक्तौ भाविके च यथास्थितवस्तुवर्णनमैश्वर्यलक्षितमुदात्तालंकारः। न चेयमतिशयोक्तिः अन्यस्यान्यतयाध्यवसायाभावात्।

(54) ननु, अङ्गिभूतरसादिविषये रसादिध्वनिरुक्त इत्याह-न चेति। तस्येति। वीररसस्याङ्गत्वाद् अप्रधानत्वात् ॥ तर्हि अङ्गभूतरसादिविषये रसवदाद्यलंकारा उक्ता इत्युदात्तालंकारविषयश्चिन्त्यः, तद्विषयस्य रसवदादिना व्याप्यत्वात्। सत्यम्, अङ्गत्वेऽपि न रसवदलंकारोऽस्योदात्तस्य तदपवादत्वात् ॥

(55) तुल्यकक्षतामपेक्ष्यैव समुच्चयनं समुच्चय इति व्युत्पत्तेर्नास्य समाध्यलंकारान्तर्भावः। यत्र ह्येकस्य कार्यं प्रति पूर्णं साधकत्वमन्यस्तु कार्याय काकतालीयेनापतति तत्र तुल्यकक्षताभावे समाधिर्वक्ष्यते। यत्र तु खले-पोतिकया बहूनामवतरस्तुल्यकक्षतया तत्र समुच्चय इत्यनयोर्भेदः।

३१२ (56) अत्रापि 'कामिनी' इति सत्, 'गलितयौवना' इत्यसत्। एव-

## माणिक्यचन्द्र

पृ.

४११ (52) व्यङ्ग्यमपीति। योग्यतया निर्देशः। शब्देनोच्यत इति। मदेन मानेन निवासप्रीतिरुज्झितेतिरूपभङ्ग्यन्तरप्रोक्तेनेति (?)। तेनेति। भङ्ग्यन्तरेण। यथेति। येन प्रकारेण शब्दसंसर्गात् सहात्मनैकघनरूपतात्मना वा व्यङ्ग्यं प्रतीयते न तथा शब्देनोच्यते, क्रमभाविविकल्पप्रभावः शब्दस्तथाऽभिधातुं न शक्त इत्यर्थः।

४१२ (53) इदमैश्वर्यलक्षितस्य वस्तुनो वर्णनया स्वभावोक्तिभाविकाभ्यां भिद्यते।

४१३ (54) वीररसेऽङ्गीभूते रसध्वनिः स्यात् इत्याशङ्क्याह। न चेति। वीररसो नाङ्गीत्यर्थः। एतदेवाह तस्येति। वीररसाश्रयो रामस्तावदिहाङ्गं किं पुना रसः। ननु रसस्याङ्गत्वे रसवदलङ्कारः स्यात् ? अस्योदात्तस्य तदपवादत्वात्। तदपवादत्वाऽकल्पने निर्विषयमुदात्तम्।

४१३-४ (55) अत्र तुल्यकक्षतया हेतवो मिलिताः कार्यं साधयन्ति। समाधौ त्वेकस्य हेतोः कार्यं प्रति पूर्णे साधकत्वेऽन्यस्तु कार्याय काकताळीयन्यायेन आपततीति न तत्र तुल्यकक्षतेत्यनयोर्भेदः समुच्चयनं हि तुल्यकक्षाणामेव स्यात्।

४१५ (56) नृपाङ्गणगतो राज्ञः प्रसादवित्तः ? पुमान् स तद्रूपस्सन्।

## सोमेश्वर

पृ.

३१२ (56) मुत्तरत्रापि । इह विशेष्यस्य शोभनत्वं प्रक्रान्तं, विशेषणस्य तु अशोभनत्वम् । 'नृपाङ्गनगतः खलः' इत्यत्र तु नृपाङ्गनगतत्वेन विशेषणस्य शोभनत्वं, विशेष्यस्य खलत्वेन अशोभनत्वमिति विपर्ययात् प्रक्रमभङ्गो दोषः। न त्वत्र कश्चित् समुच्चीयमानःशोभनः, अन्यस्तु अशोभन इति सदसद्योगो व्याख्येयः। तथा ह्यत्र शोभनस्य सतोऽशोभनत्वविवक्षा, 'दुर्वाराः स्मर' इत्यत्र तु अशोभनानामेवेति विवक्षितम्। अत एव 'कथं सोढव्यः' इति सर्वथा दुष्टत्वाभिप्रायेण उपन्यस्तमिति अस्त्यनयोः प्रकारयोर्भेदः।

३१२ (57) रुद्रटेन तु—

व्यधिकरणे वा यस्मिन् गुणक्रिये चैककालमेकस्मिन्। उपजायेते देशे समुच्चयः स्यात् तदान्योऽसौ ॥ 'धुनोति' इति। तत्र एकाधिकरणक्रिययोः समुच्चयः ॥ 'कृपाणे'त्यादि कृपाणपाणित्वं साधुवादश्च गुणौ, तयोः क्षितिसुरालयौ भिन्नौ देशौ ॥

## माणिक्यचन्द्र

पृ.

४१५ (56) खलतया चासन्। अत्र शशी स्वयं सन्, धूसरत्वेनासन्। कामिनीति सत् गलितयौवनत्वमसत्। एवमग्रेऽपि विशेष्यद्वारेण सत्ता विशेषणद्वारेणासत्तैकस्य वस्तुनः सर्वत्र ज्ञेया। इह विशेष्यस्य सत्त्वं विशेषणस्य चासत्त्वं प्रक्रान्तं, ततो नृपाङ्गणगत इतिविशेष्यतया सद्व्याख्येयं, खल इति विशेषणतया चासत्। अन्यमताभिप्रायेण विशेषणविशेष्ययोरत्र वैपरीत्ये प्रक्रमभङ्गः। तथा नृपाङ्गणगतः खल इत्यसत् अन्ये तु सन्त इति समुच्चीयमानस्य सतस्तादृशेन सता योग इति व्याख्यायां तु सहचरभिन्नोऽर्थो दुष्ट इतिरूपः प्रक्रमभङ्गः। तथाऽत्र सत (?) एव सतोऽसत्त्वमेकस्यैव वस्तुन इति विवक्षितम्। अत एव चारुत्वेनान्तःप्रविष्टान्यपि राश्यादीनि शल्यानीति प्रकारेण व्यथाहेतुत्वेनोक्तानि। 'दुर्वाराः स्मरे'त्यत्र तु कथं सोढव्य इति सर्वथा दुष्टत्वाभिप्रायेणोपन्यास इति विवेकः।

४१६-१७ (57) धुनोतीत्यत्रैकाधिकरण्यं क्रिययोः। कृपाणपाणित्वसाधुत्वादौ सिद्धरूपत्वाद्गुणौ तयोः क्षितिस्स्वर्गश्च भिन्नो देशः। न वाच्यमिति यथोक्तं रुद्रटेन।

## सोमेश्वर

पृ.

३१४ (58) सकलरत्नसारतुल्यो विम्बाधर इति तेषां बहुमानो वास्तव एवेति प्रतीयमानोपमापि ।

३१५ (59) धर्मिणि पर्वतादौ अयोगव्यवच्छेदोऽस्तित्वं व्यापकस्य वह्न्यादेः साध्यम् ।

३१७ (60) 'पुष्टार्थपदं न प्रयोज्यम्' इति पुष्टार्थानि विशेषणान्युपात्तानि अत्रेति दोषत्यागमात्रं, न त्वलंकार इत्याशङ्क्याह-यद्यपीति ।

३१७ (61) न चैषेति । क्वचित्प्रकृतनिष्ठं साम्यं, यथा—सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति । अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥ इति समुच्चितोपमायाम् ।

(62) उद्भटेन तु व्याजोक्त्यनभिधानाद् अत्रापि अपह्नुतिका ॥

३१८ (63) 'युवतिरेव कामास्त्रम् ।'

३१९-२० (64) अत्र तु रुद्रटोदाहृते 'काव्यत्वमनुप्रासादेव' इत्याह कोमलानुप्रासेति । यद्यपि अव्यभिचारितयैव विकासादीनां नैरन्तर्येण जननमिहोपचारप्रयोजने व्यङ्ग्यं तद् असुन्दरमपि गुणीभूतव्यङ्ग्यनिबन्धनं भवतीति प्राक्प्रतिपादितमेव, तथापि अलंकारचिन्तायाः प्रक्रान्तत्वात् तद् अपह्नुत्यैवाव-

## माणिक्यचन्द्र

पृ.

४१८-१९ (58) विम्बाधरस्सकलरत्नेभ्योऽधिक इति व्यङ्ग्यव्यतिरेकोऽपि । अन्ये तु सकलरत्नसारतुल्योऽधर इति तेषां तत्र प्रीतिर्वास्तवीति व्यङ्ग्योपमामाहुः ।

४२० (59) धर्मी शैलादिः, तत्रास्तित्वमयोगव्यवच्छेदः । व्यापकस्येति अग्न्यादेः ।

४२१ (60) ननु पुष्टार्थग्रहणाद्दोषत्यागमात्रमेतदित्याशङ्क्याह । यद्यपीति ।

४२२ (61) न चैषेति । अयं भावः- अपह्नुतौ किलोभयनिष्ठं साम्यं अत्र तु प्रकृतस्यैव सद्भावात्प्रकृतनिष्ठमेव साम्यं,
"ये कालतां कुटिलतामिव न त्यजन्ति" इति समुच्चितोपमावत् अत्रापि प्रकृतनिष्ठमेव साम्यम् ।

(62) उद्भटमते व्याजोक्त्यभावादत्रापह्नुतिः

४२४ (63) युवतिरूपं कामास्त्रमिति विग्रहः ।

४२५ (64) भामहोद्भटाद्याः । अव्यभिचारितया विकासादेर्नैरन्तर्येण करणमिहोपचारात्प्रयोजनं व्यङ्ग्यं तच्च गुणीभूततया महिम्नेत्यत्रैवकारेण प्रतिपाद्यते । अस्मन्मते काव्यलिङ्गमेव हेतुः । रुद्रटस्तु भिन्नमूचे ।

## सोमेश्वर

पृ. पृ.

३१९-२०(64)धारणगर्भमिदमभिहितम् । अत एव तटस्थतयैव उक्तं 'समाम्नासिषुः' इति उद्भटादयः प्रत्यपादयन्निति ह्यत्रार्थः । काव्यलिङ्गमेवेति । काव्यलिङ्गस्यैव यदि परं हेतुरिति नाम, यद् भामहः
हेतुश्च सू [क्ष्मो] लेशोऽथ नालंकारतया यतः ॥

३२२ (65) उत्कर्षे सारस्य पुंसि स्मरन्ति कवयस्तु नपुंसकेऽपीति।

३२८ (66) अत्र दक्तरलत्वादिना स्वाभाविकेन लक्ष्मणा मदोदयकृतं दक्तारल्यादि तिरोहितम् ॥ तत्रापीति । मदोदयेऽपि दक्तारल्यादिदर्शनात् ।

३२९ (67) दृष्ट इति । दृशिरत्र उपलब्धिमात्रवचनः । 'तद्भवैः प्लाविताम्भोभवैः कुहरुतैः कुहकुहशब्दैः नाभ्यादिनिम्नदेशोत्थैः । स्मारिता इति घटादिपाठे स्मरतेर्मानुबन्धत्वेऽपि 'न ह्रस्वो व्यवस्थितविभाषितस्य वा' इत्यस्यानुवृत्तेः । सादृश्यं विना तु स्मृतिर्न स्मरणमलंकारः ।

३३२ (68) अत्र मलयजरसविलेपादीनां चन्द्रप्रभयाऽविभाव्यतां गता इति भेदाप्रतीतिर्दर्शिता । अत्र अष्टाविंशतिभिर्मात्राभिर्द्विपदीच्छन्दः ।

३३३ (69) अत्र एकस्या योषित एकेनैव वसनस्वभावेन हृदयादौ युगपद् अवस्थानम् ॥

३३५ (70) अत्र दृष्टिलक्षणेन उपायेन स्मरस्य हरेण दाहविषयत्वं निष्पादितं मृगनयनाभिः पुनस्तेनैवोपायेन तस्य जीवनीयत्वं क्रियते । तच्च दाहविषयत्वस्य प्रतिपक्षभूतम्, तेन व्याघा-

## माणिक्यचन्द्र

४२९ (65) न्याय्य एवार्थे सारशब्दः क्लीबोऽन्यत्र तु चिन्त्यः ।

४३६ (66) अत्र दृष्टितरलत्वादिकं सहजं मदोदयकृतस्य दृष्टितरलत्वादेस्तिरोधायकम् । तत्रापीति । मदोदयेऽपि । एतस्येति । दृष्टितरलत्वादेः ।

४३७-३८ (67) दृष्टे इति । उपलब्धिमात्रेऽत्र दृशिः । तद्भवैरिति । प्लाविताम्भोभवैः । कुहरुतानि । कुहशब्दाः निम्ननाभिदेशोत्थाः । स्मारिता (?) इति ह्रस्वप्राप्तिः । सादृश्यं विना स्मृतिर्नालङ्कारः।

४४१ (68) तथाऽत्र श्रीखण्डाङ्गरागादेश्चन्द्रांशुभिः सहाविभाव्यतां गता इत्यभेदेनोक्तिः । अष्टाविंशतिमात्रं द्विपदीच्छन्दः ।

४४३ (69) अत्रैकैव स्त्री एकेनैव वसनरूपेण युगपच्चित्तादौ वर्तते ।

४४६ (70) अत्र दृग्रूपोपायेन येन हरः स्मरम धाक्षीत् तेनैव कान्ताः तमजीजिवन् । दाहस्य च जीवनीयत्वं विपक्षः, तेन निष्पादितत्त्वस्तुल्यहानिहेतुत्वाद्व्याघातता । विरुपकद्वयमिति चासलो-

## सोमेश्वर

पृ.

३३५ (70) तोऽलंकारः । सोऽपि व्यतिरेकनिमित्तत्वेन अत्रोक्तः ॥ 'विरूपाक्षस्य' इति 'वामलोचनाः' इति च व्यतिरेकगर्भावेव वाचकौ, 'जयिनीः' इति व्यतिरेकोक्तिः । रसभावतदाभासतत्प्रशमानां गुणीभूतव्यङ्ग्यावसरे रसवत्प्रेयऊर्जस्विसमाहितानि तथा भावोदयभावसन्धिभावशबलताश्च पृथगलंकाराः प्राक् प्रतिपादिताः ॥ आशीश्च अप्राप्तप्राप्तीच्छारूपमाशंसनप्रियोक्तिमात्रं, अथवा स्नेहनिर्भरतया प्रतीयत इति भावध्वनिरेव नालंकारः ।

३३६ (71) तत्रैषा तिलतण्डुलन्यायेन मिश्रत्वे शब्दालंकारगतत्वेनार्थालंकारगतत्वेन उभयगतत्वेन च त्रेधेति त्रिविधां संसृष्टिमाह-सेष्टेति ॥ यथासंभवमिति न सर्वेषां लक्षितानां, अपि तु केषांचित्, तत्रापि तेषां मध्ये क्वचिद् द्वयोः क्वचित् त्रिचतुराणामिति यथायोगम् । संसृष्टेश्च विषयभेदेन त्रिरूपत्वेऽपि संसृष्ट्या चैकरूपयेति प्रागुक्तं न विरुध्यते, नैरपेक्ष्यलक्षणस्य रूपस्याभिन्नत्वात् । वक्ष्यमाणसंकरस्तु स्वरूपेणैव नानात्वेनावभासत इति युक्तस्तत्र त्रिरूपताव्यवहारः ॥ सापि सजातीययोर्विजातीययोर्वालंकारयोः स्यात् ।

३३६ (72) यमकानुप्रासाविति विजातीयौ । अत्रैव 'लकलो-लकलो' इति तथा 'कलोल-कलोल' इति सजातीययोर्यमकयो[ः] संसर्गः ॥ तथाविधे परस्पर-

## माणिक्यचन्द्र

पृ.

४४६ (70) चना इति च व्यतिरेकगर्भौ शब्दौ । जय(यि)नीरिति व्यतिरेकोक्तिरिति अत्र व्यतिरेकनिमित्ततादृग्रूपोपाययोः भेदेऽप्यभेदातिशयोक्तिरपि । रसवदाद्यलङ्काराः प्रागुक्ताः । आशीस्तु नालङ्कारः प्रियोक्तिमात्रत्वात् । स्नेहात्मरत्याख्यभावत्वे भावध्वनित्वाद्वा ।

४४६ (71) न सर्वेषामेवालङ्काराणां किन्तु केषांचित् । तत्रापि क्वचिद् द्वयोः क्वचित्त्रयाणामित्यादि । शब्दार्थोभयालङ्कारविषयत्वेन त्रिरूपत्वेऽपि संसृष्टेरेकरूपत्वमेव मिथो नैरपेक्ष्यरूपस्वरूपस्यैकत्वात् । निरपेक्षतया इत्युक्त्या तिलतण्डुलन्यायेनालंकाराणां योगे संसृष्टिः । सङ्करस्तु स्वरूपेणैव नानात्वेनोक्तत्वात् त्रिधैव । तत्र नैरपेक्ष्याभावात् क्षीरनीरन्यायेनालङ्काराणां योगः ।

४४९ (72) अत्र यमकानुप्रासाविति विजातीयालङ्कारसंसृष्टिर्यथा तथा लकलो लकलो इति कलोल कलोल इति च सजातीययमकालङ्कारसंसृष्टिरपि । तथा

## सोमेश्वर

पृ.

३३६ (72) निरपेक्षे ॥ उपमोत्प्रेक्षे इति विजातीये ॥ अत्रैव 'लिम्पतीव' इति 'वर्षतीव' इत्युत्प्रेक्षयोः सजातीययोः संसृष्टिः ॥

३३८ (72a) ननु, अत्र यमकचित्रयोः शब्दालंकारयोः शब्दवदुपकार्योपकारकत्वाभावेन अङ्गाङ्गिभावाभावात् संसृष्टिरेव परस्परनिरपेक्षेत्याह ।

३३९-३४० (73) एतयोरिति मुखबिम्बयोः। 'बिम्बं प्रसीदति' इत्येतच्च 'मुखं प्रसीदति' इति ॥ एकक्रियायोगे एकस्य प्रकृतत्वेऽन्यस्य अप्रकृतत्वे दीपकं तुल्ययोगितेति यदि द्वयोरपि प्रकृतत्वमेव वा ॥

३४० (74) अत्र 'वक्त्रं शशीव' इत्युपमा। ननु, 'वक्त्रमेव शशी' इति रूपकम् इत्याह-मुख्यतयेति । हासद्युतेः प्रकृतत्वात् ज्योत्स्नापेक्षया मुख्यता । सा च वक्त्रस्यैव अनुगुणेति उपमायाः साधकं प्रमाणम् ॥ न तथेति । शशिन्यपि हासद्युतेः शुक्लतया मनागानुकूल्यमस्तीति भावः ॥ तस्या इति हासद्युतेः ॥

३४०-४१ (75) बाधत्वे यथा-'राजनारायणम्' इति । 'राजैव नारायणः' इति मयूरव्यंसकादित्वाद् रूपकसमासः, ततश्च उपमानस्य नारायणस्य प्राधान्यम् । तं प्रति लक्ष्मीप्रयुक्तमालिङ्गनं घटत इत्यालिङ्गनमुपमाया बाधकं प्रमाणम् । उपमायां हि उपमेयस्य राज्ञः प्राधान्यं, तत्रैव चित्तविश्रान्तेः । न च स्वभर्तृसदृशमन्यं प्रेयसी काचिद् आलिङ्गति ॥ सदृशमिति, राजानम् ॥

## माणिक्यचन्द्र

पृ.

४४७ (72) विधे इति । मिथो निरपेक्षे । उपमोत्प्रेक्षे इति । उत्तरपूर्वार्धगे विजातीये । लिम्पतीवेति वर्षतीवेत्युत्प्रेक्षे सजातीये, तयोरत्र संसृष्टिः ॥

४५० (72a) शब्दवच्छब्दालङ्कारयोः अत्राङ्गाङ्गिभावाभावान्निरपेक्ष्ये संसृष्टिरेवेत्याह

४५१-५२ (73) एतयोरिति वक्त्रबिम्बयोः । समुच्चयेति । बिम्बं मुखं चैतत्प्रसीदति इति भङ्ग्या एकस्य प्रकृतत्वेऽन्यस्याप्रकृतत्वे दीपकम् । द्वयोरप्रकृतत्वे तुल्ययोगिता ।

४५२ (74) अत्र वक्त्रं शशीवेत्युपमा, न तु वक्त्रमेव शशीति रूपकमित्याह-मुख्यतयेति । हासद्युतिः प्रकृतत्वान्मुख्या । सा च वक्त्रानुगुणेत्युपमासाधिका । तस्या इति । हासद्युतेः । एतस्याश्च शुक्लतया चन्द्रेऽपि किञ्चिदानुकूल्यमस्तीत्यतो न बाधकत्वम् ।

४५३ (75) बाधकत्वेनाह । राजेति । राजैव नारायण इति रूपकसमासः । उपमानप्राधान्ये रूपकमुपमेयप्राधान्ये उपमेति सर्वत्र ज्ञेयम् । सदृशमिति । राजानम् । प्रेयसी लक्ष्मीः । निजपतितुल्यमन्यं कान्ता नालिङ्गतीत्यर्थः ।

## सोमेश्वर

पृ.

३४१ (76) रूपकविधानच्छेदिनो बाधकस्य मञ्जीरशिञ्जितस्य यद्यपि साधकत्वं बाधकत्वं चोभयमपि अस्ति, तथापि 'बाधकत्वेनैव व्यपदेशा भवन्ति' इति न्यायात् बाधकत्वस्यैव प्राधान्यं, साधकत्वापेक्षया बलीयस्त्वेन उत्कटतया प्रतीतेः ॥

३४२ (77) यद्यपि सावयवमिदं रूपकमखिलवाक्यव्यापि तथापि प्रतिपदं रूपकसद्भावात् तथाव्यपदेश इत्येकपदानुप्रवेशो न विरुद्धः ॥ त्रिप्रकारतयैवेति । एतेन–

शब्दार्थवर्त्यलंकारा वाक्य एकप्रभाविनः ।
संकरो वैकवाक्यांशप्रवेशाद् वाभिधीयते ॥

इति भट्टोद्भटोक्तः संकरः संसृष्टावन्तर्भावित इति त्रेधैवायम् ।

३४२-४३ (78) ननु, पुनरुक्तवदाभासस्य तावच्छब्दस्य वैचित्र्यमुत्कटमिति उभयालंकारत्वमनपेक्ष्यैव शब्दालंकारत्वेनोक्तिः कृता, परंपरितरूपकादीनां तु किमर्थालंकारेषु पाठ इत्याह–अर्थस्य त्विति । वस्तुवृत्त्या तु भिन्नाः प्रतिपादयितुमुचिता इति भावः ।

३४४ (79) 'अकुण्ठे'ति । अत्र शृङ्गारप्रतिकूला वर्णाः । शृङ्गारे हि उपनागरिका वृत्तिरुचिता ॥

३४५ (80) अन्यरूपमिति । उपमानरूपमुपमेयरूपं वा ॥ तस्येति धर्मिणः ॥ प्रतीयमानेनापीति । शाब्देन अनुपात्तेन उभयानुगमक्षमेण शब्दोपात्तच्युतत्वादि·

## माणिक्यचन्द्र

पृ.

४५४ (76) यद्यपि मञ्जीरशिञ्जितं रूपकविधिच्छेदेन बाधकं पादानुकूल्यादुपमां प्रति साधकं च स्यात्, तथाऽपि बाधकत्वेन व्यपदेशः । 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायात् । साधकत्वापेक्षया बलिष्ठत्वेनोत्कटया प्रतीतेर्बाधकत्वं प्रधानम् ।

४५४ (77) शब्दार्थवृत्त्यलङ्कारस्तूद्भटोक्तः संसृष्टिरेवेति त्रिधैव ।

४५५-५६ (78) वस्तुतया परम्परितरूपकादेरुभयालङ्कारतया भिन्नत्वेन वक्तुं युक्तावर्थालङ्कारेषु तत्पाठोऽर्थस्योत्कटतया वैवश्यात् ॥

४५७ (79) अकुण्ठेति । शृङ्गारे ह्युपनागरिकी वृत्तिर्योग्या ।

४५९ (80) अन्यरूपमिति । उपमेयरूपमुपमानरूपं वा ॥ तस्येति । धर्मिणः । प्रतीयमानेन । शब्दानुक्तेनोभयानुगमक्षमेण शब्दोक्तसमानधर्मव्यतिरिक्तेन केनापीत्यर्थः ।

## सोमेश्वर

पृ.

३४५ (80) धर्मव्यतिरिक्तेन केनचिदित्यर्थः ॥ अनिर्वाहादिति। सविशेषणत्वं निर्विशेषणत्वं वा यद् उपमेये प्रक्रान्तम् उपमाने तस्य अनिर्वाहादित्यर्थः ॥

३४५ (81) अत्र च्युतत्वमुपमानोपमेययोः साधारणो धर्मस्तस्यान्यरूपत्वं नपुंसकस्य उपमेयविशेषणत्वे पुंस्त्वं, तत्र उपमेयस्य साक्षाद्धर्मसमन्वयः, उपमानस्य तु प्रतीयमान इति शब्देन धर्मेण प्रक्रमे भग्नप्रक्रमत्वम् । यदि तु विपरिणामेन लिङ्गवचसोरपरस्यापि संबन्धस्तदा अभ्यासलक्षणो वाक्यभेदः स्यात् । द्वे वाक्ये स्यातामित्यर्थः। एवं च व्यवधानेन प्रकृतोऽर्थो न प्रतीयेत विपरिणामश्च शास्त्रीयकाव्येषु न युक्तः ॥

३४६ (82) तद्विदां प्रसिद्धेन प्रकारेण ॥

३४८ (83) केवलस्येति, असमासस्थस्य। समासे तु असौ योग्यताद्यपि प्रतिपादयति ॥ तस्य चेति, साधर्म्यस्य ॥ तत्रेति, संभावनवाचकत्वे ॥

३४८-४९ (84) व्यर्थ एवेति। उत्प्रेक्षामात्रमेवात्रोचितं, न त्वर्थान्तरोपन्यासस्तत्समर्थनार्थ इति तात्पर्यम् । समासोक्तिदोषानाह-साधारणेति। मानः परिमाणमभिमानश्च। चिरयायिदिनो दीर्घाहा निदाघः ॥ यथा सदृशविशेषणेति। रवेः करैः इति सदृशमनुकूलं विशेषणं, दिनश्रियास्तु 'विजृम्भिततापया' इत्यादि सदृशं विशेषणम्। व्यक्तेर्लिङ्गस्य विशेषः पुंस्त्वं

## माणिक्यचन्द्र

पृ.

४५९ (80) भग्नेति। उपमेयस्य विशेषणादिकमुपमाने चेन्न निर्व्यूढं तदा क्रमभङ्गः।

४५९-६० (81) अत्र च्युतत्वादिको धर्म उपमानोपमेययोः प्रत्येकमन्यलिङ्गवचन इति प्रक्रमभङ्गः। लिङ्गवचनविपरिणामेन यद्यपरस्यापि सम्बन्धः तदा व्यासरूपवाक्यभेदे वाक्यद्वयी। तथा सति प्रतीतिः व्यवधीयते, विपरिणामश्च साहित्येन स्यात्।

४६० (82) न तथेति कोविदप्रसिद्धप्रकारेण।

४६३ (83) केवलस्येति। असमासस्थस्य, समासस्थस्तु योग्यताद्यर्थवादी स्यात्। तस्य चेति। साधर्म्यस्य। अस्यामिति। उत्प्रेक्षायाम्। तत्रेति। सम्भावनाभिधाने।

४६४-६५ (84) व्यर्थ एवेति। उत्प्रेक्षामात्रमेवात्र युक्तं न तत्समर्थकोऽर्थान्तरन्यासः। दिवाभीतशब्दस्योलूकार्थत्वेन समुचितोपमाख्यायां नैतद्दोषावतारः। तस्येति उपमानविशेषस्य। स्पृशतीति। तापः खेदोऽपि। मानशब्दः परिमाणाभिमानयोः। चिरयायिदिनः दीर्घाहो निदाघः। सदृशेति। रवेः करैरिति सदृशमनुकूलं विशेषणम्। दिनश्रियास्तु तापयेति

## सोमेश्वर

पृ.

३४८-४९ (84) स्त्रीत्वं च ॥ नायकतयेति । नायकश्च नायिका चेति एकशेषः ॥ ननु, यथा दयिते दयितां करैः स्पृशति सति दयितान्तरस्य तापो भवति तथा रवेः करैः ककुभः स्पृशति सति चिरयायिदिनश्रियोऽपि ताप इति श्लेषोपमेयमिति उपादेयमेव 'दयितया' इति पदमित्याह ।

३५० (85) अन्येऽपीति । यथोपमायां हीनपदत्वे- क्वचित्काले प्रसरता क्वचिदापत्य निघ्नता । शुनेव सारंगकुलं त्वया भिन्नं द्विषां बलम् ॥ -अत्र शुनोपमानेन च कृतार्थकदर्थनेऽनुचितार्थत्वम् । 'क्वचित्काल' इत्यत्र क्वचिदर्थस्य सामान्येनोपक्रान्तस्य काललक्षणेन विशेषेण योगः ॥

(86) निन्दायां प्रोत्साहने चानुचितार्थत्वं गुणः । यथा-कुशलसखीजनवचनैरतिवाहितवासरा विनोदेन । निशि चण्डाल इवायं मारयति वियोगिनीश्चन्द्रः ॥

(87) निर्मोकमुक्तिमिव गगनोरगस्य लीला ललाटिकामिव त्रिविष्टपविटस्य ॥ अत्र रूपकेणैव साम्यस्य प्रतिपादितत्वाद् 'इव' शब्दोऽधिकः ॥

३५१ (88) अत्र राजशब्द एवोभयार्थत्वाच्छशिनमाहेति श्लेषस्यायं विषयो युक्तः । यस्तु पृथक्त्वमुपादाय राजशशिनोरुपमानोपमेयभावनिबन्धः सोऽधिकः सह्यार्थ एव तद्विदां स्वदते न शाब्दः ॥ एवम्—

## माणिक्यचन्द्र

पृ.

४६४-६५ (84) विशेषणम् । व्यक्तिर्लिङ्गम् । तद्विशेषः पुंस्त्वं स्त्रीत्वं च । नायकतयेति । नायकश्च नायिका चेत्येकशेषः । ननु यथा प्रियां स्पृशन्तं प्रियं दृष्ट्वा अन्यस्यास्तापः स्यात्तथाऽर्के दिशः स्पृशति सति ग्रीष्मश्रियोऽपि ताप इति श्लेषोपमेयमिति दयितयेति युक्तमित्याह ।

४६६ (85) अन्येऽपीति । यथा—क्वचित्काले प्रसरता क्वचिदापत्य निघ्नता । शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥ अत्रोपमायां शुनोपमानेन प्रकृतार्थकथनेऽनुचितार्थता क्वचिदिति सामान्येन निष्पाद्य पश्चात्कालेन योगः ।

(86) प्रोत्साहनिन्दादावनुचिताऽर्थताऽपि न दोषः, यथा—हनूमानिव प्रेषणे प्रेष्य एषः ।
"वियोगे मारकः स्त्रीणां चण्डाल इव चन्द्रमाः" इत्यादौ

४६७ (87) "निर्मोकमुक्तिमिव गगनोरगस्य" इत्यादौ रूपकेणैव साम्यस्योक्तत्वादिवप्रयोगेऽधिकपदत्वं दोषः ।

(88) इत्यादौ राजशब्दस्योभयार्थत्वेन श्लेषनिष्पत्त्या स्वार्थसिद्धौ यदौपम्यकल्पनं तदधिकम् । औपम्यं ह्यार्थमेव हृद्यं व्यङ्ग्यत्वान्न शाब्दम् । एवं ।
"दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव" इत्यत्र राजेति

| सोमेश्वर | माणिक्यचन्द्र |
|---|---|
| पृ. | पृ. |
| ३५१ (88) दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव । –इत्यत्रापि श्लेषस्य विषये रूपकमासूत्रितमनादृत्य उपमानुरागिणा कविना सैवोपनिबद्धा । न चासौ ताभ्यां स्पर्धितुमुत्सहते तयोः । यथा पूर्वं प्रतीयमानार्थसंस्पर्शातिरेकात् तदनुविधायिनः सहृदयैकसंवेद्यस्य चमत्कारस्य संभवादिति उपमाधिक्यम् । | ४६७ (88) श्लेषं हित्वेन्दुः क्षीरनिधाविवेत्युपमारागिणा राजेन्दुरिति रूपकमुक्तम् । न चोपमा व्यङ्ग्यार्थाधिक्यवतोः श्लेषरूपकयोः समा स्यात् व्यङ्ग्यार्थस्पर्शाभावात् । तस्मादत्रोपमाऽधिका । |
| ३५१ (89) विरोधस्य असंभवः, यथा— या धर्मभास्तनयापि शीतलैः स्वसा यमस्यापि जनस्य जीवनैः । कृष्णापि शुद्धेरधिकं विधातृभिर्विहन्तुमंहांसि जलैः पटीयसी ॥ अत्र विरोधस्यैकाधारतयैव उपपत्तिरित्युक्तम् । ततो धर्मभास्तनयात्वादीनां च धर्माणां भिन्नाधारतयोक्तौ विरोधस्य असंभवः ॥ | ४६७ (89) तथा— "या धर्मभास्तनयाऽपि शीतलैः स्वसा यमस्यापि जनस्य जीवनैः । कृष्णाऽपि शुद्धेरधिकं विधातृभिः विहन्तुमंहांसि जलैः पटीयसी ॥" अत्र नद्याः पयोभिः परमार्थादैक्येऽपि शब्दार्पितनानात्वानुभवाद्विरोधस्य भिन्नाधारत्वं, तच्चासम्भवि, विरोधस्यैकाधारत्वेनोक्तत्वादित्यसम्भवो दोषः । |
| ३५१-५२ (90) तरंगय दृशोऽङ्गणे पततु चित्रमिन्दीवरं स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् । क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिकामुदञ्चय मनाङ्मुखं भवतु च द्विचन्द्रं नभः ॥ अत्र उपमानानामिन्दीवरादीनां निन्दाद्वारेण नयनादीनामुपमेयानां यस्तेभ्योऽतिशयो वक्तुं प्रक्रान्तः स मुखचन्द्रयो'र्भवतु च द्विचन्द्रं नभः' इति सादृश्यमात्रप्रतिपादनाद् न निर्व्यूढम् । 'भवतु लक्ष्यलक्ष्मा शशी' इति तु युक्तम् । | ४६८ (90) "तरङ्गय दृशोऽङ्गणे पततु चित्रमिन्दीवरं" इत्यत्रोपमानभूतेन्दीवरादेरपकर्षणद्वारेण नेत्रादीनां व्यतिरेको वक्तुं प्रक्रान्तः । स च "भवतु च द्विचन्द्रं नभः" इत्युक्त्या साम्यमात्रप्रतीतौ न निर्व्यूढ इति व्यतिरेके भग्नप्रक्रमत्वम् । "भवतु तद् द्विचन्द्रं नभः" इति तु युक्तम् । |
| ३५२ (91) इत्येष इति । एष मार्गोऽद्भुतं वर्त्म विद्वदादीनां ध्वनिकारादीनां नानाग्रन्थतया विभिन्नो- | ४६८-६९ (91) इत्येष इति । एषोऽद्भुतोऽलङ्काराध्वा । विभिन्नोऽपीति । नानाग्रन्थगतत्वेन पार्थक्येन |

## सोमेश्वर

पृ.

३५२ (91) ऽप्यनेकरूपोऽपि एकरूपतया यद् भवति तत्र संघटना-विसंस्थुलस्य सुखप्रतीत्यर्थमेकत्र संग्रहः, सैव हेतुः, तद्वशाद् एकात्मताप्रतीतेः । तत्तद्ग्रन्थानामत्र अन्तर्भाव इति भावः ॥ अथ च सुधियां विकासहेतुर्ग्रन्थोऽयं कथंचिदपूर्णत्वाद् अन्येन पूरितशेष इति द्विखण्डोऽपि अखण्ड इव यद् भाति तत्रापि संघटनैव संनिमित्तम् ॥

## माणिक्यचन्द्र

पृ.

४६८-६९(91) स्थितोऽपि यदेकरूपो भाति तत्र संघटना विसंस्थुलस्य सुखबोधायैकत्र संग्रहणं हेतुः। ग्रन्थास्सर्वेऽप्यत्रान्तर्मग्ना इत्यर्थः। अथ चायं ग्रन्थोऽन्येनारब्धोऽपरेण च समर्थितः इति द्विखण्डोऽपि संघटनावशादखण्डायते । सुघटं ह्यलक्ष्यसन्धि स्यादित्यर्थः ।

# Appendix B

Parallelisms in the Saṃketas of Rucaka and Someśvara.

*N.B*-The references of the Saṃketa of Rucaka are to the pages of the text published in the Calcutta Oriental Journal Vol. II, nos 6 & 12.

## उल्लास १

| पृ. | रुचक | पृ. | सोमेश्वर |
|---|---|---|---|
| १ | (1) न चेति तिक्ताद्यो हि न हृद्याः। | १ | (1) न चेति तिक्ताद्यो हि न हृद्याः। |
| | (2) रसाङ्गभूतव्यापारेति - उक्तं हि हृदयदर्पणे—<br>शब्द to काव्यधीर्भवेदिति ॥ | ३ | (2) रसाङ्गेति। रसस्याङ्गिनो योऽङ्गभूतो व्यञ्जनात्मा व्यापारस्तन्निष्ठतया विसदृशम्। यद्भट्टनायकः-<br>शब्द to काव्यगीर्भवेत्। |
| ४ | (3) After refuting तुल्ययोगिता, दीपक and समुच्चय, R says तस्माद् रिक्तमेतत्। इह 'यः कौमारहर' इत्यादीन्यनुत्कण्ठाकारणानि, तेषु सत्स्वपि सा नोत्पन्ना तद्विरुद्धाया उत्कण्ठाया उत्पादात् अतश्च विशेषोक्तिरियम्। सा च कार्यस्य साक्षान्निषिध्यमानत्वेनाप्रतीतेर-स्फुटा। etc. | ७ | (3) यः कौमारेति। अत्र वरादेः कारणस्य सामग्र्ये सत्यपि निधुवनविधेः कार्यस्यानुक्तेर्विशेषोक्तिरलङ्कारः केवलमस्पष्ट इत्याह।[¦] |
| | (4) निःशेषेत्यादि-(च्यु)तं न तु क्षालितं, निर्मृष्टो न तु किञ्चिन्मृष्टः। दूरमनञ्जने निकटे तु साञ्जने, पुलकिता तन्वीत्युभयं व्यङ्ग्यपक्षे। अधमपदन्तु व्यञ्जकम्। एतच्चोदाहरणं वैदग्ध्येन युगपन्निषेधे विधौ च वाच्ये विधि निषेधयोर्व्यङ्ग्ययोर्मतम्। | ९ | (4) निःशेषेति च्युतं चन्दनं न तु क्षालितम्। निर्मृष्टो न तु किञ्चिन्मृष्टः। दूरमनञ्जने निकटे तु साञ्जने। पुलकिता तन्वीति चोभयं विधेयं व्यङ्ग्यपक्षे, अधमपदं च व्यञ्जकम्। |

---

[¦] N B the point to be noted is that both R & S take this as अस्फुटविशेषोक्ति R's discussion, however, is more elaborate He takes this as अस्फुटविभावना also

## उल्लास २

| पृ. | रुचक | पृ. | सोमेश्वर |
| --- | --- | --- | --- |
| ७ | (1) व्यभिचाराच्चेति-यत्र व्यक्तौ संकेतः सा व्यवहारकाले व्यभिचरति । | १३ | (1) व्यभिचाराच्चेति । यदि व्यक्तौ संकेतः स व्यवहारकाले व्यभिचरति बाल्यादिविशेषात् । |
|  | (2) पारिभाषिकमिति-अन्यथा जातिशब्दत्वं स्यात् । न खलु स्वयं परमाणुर्नाप्यपरमाणुः, परमाणुत्वसम्बन्धात्तु परमाणुरिति । | १४ | (2) पारिभाषिकमिति । ततो न जातिशब्दत्वम् । अन्यथा न खलु स्वयं परमाणुर्नाप्यपरमाणुः परमाणुत्वसंबन्धात् तु परमाणुरिति । |
| ११ | (3) भद्रेति-भद्रा कल्याणप्रकृतिः, भद्रा हस्तिनां विशिष्टा जातिश्च । वंशः पृष्ठनाडिश्च । शिलीमुखा याचका (सायकाः) भ्रमराश्च । परान् वारयतीति परवारणः, परः प्रकृष्टो वारणो हस्तीति । च दानं त्यागो मदश्च । | २९ | (3) भद्रेति भद्रः कल्याणप्रकृतिः । भद्रा हस्तिनां विशिष्टजातिश्च । वंशः पृष्ठनाडि[रन्वय]श्च । शिलीमुखाः शरा भ्रमराश्च । परान् वारयति । परः प्रकृष्टो वारणो हस्ती च । दानं त्यागो मदश्च । |

## उल्लास ३

| पृ. | रुचक | पृ. | सोमेश्वर |
| --- | --- | --- | --- |
| १२ | (1) यद्यपि सन्ध्यायामवकाशो भवत्येवेति विवक्षितम्, तथापि तदुच्यमानं परस्य लक्षणीयं भवतीति तथा नोक्तम् । अत्र चान्यः तटस्थः परपुरुषः । | ३३ | (1) यद्यपि संध्यायामवसरो भवत्येवेति विवक्षितं, तथापि तदुच्यमानं परस्य लक्षणीयं भवतीति तथा नोक्तम् । |
|  | (2) मिथः संयोग इति । तत्र वक्तृबोद्धव्ययोगे यथा अत्ता इति । | ३४ | (2) मिथः संयोग इति । तत्र वक्तृबोद्धव्ययोगे यथा अत्ता इत्थ नु मज्ज इति । |
| १३ | (3) महमिति निपात आवयोरित्यर्थे । ममेति तु व्याख्यायमाने व्यङ्ग्यस्याभिधेयत्वमिव स्यात् । अत्र वक्तृबोद्धव्य (भोद्धव्य) पर्यालोचनया शेष्व (शेष्य) इति विधिरूपव्यङ्ग्यार्थप्रतीतिः । एवमन्येऽपि द्विकभेदास्त्रिकादिभेदाश्च स्वयमभ्यूह्याः । | ३४ | (3) मह इति निपात आवयोरित्यत्रार्थे न तु ममेति ॥ एवं हि विशेषवचनमेवाशङ्काकारि भवेदिति प्रच्छन्नोऽभ्युपगमो न स्यात् । ततश्च व्यङ्ग्यस्याभिधेयत्वमेव स्यात् । अत्र निषेधे वाच्ये वक्तृबोद्धव्यपर्यालोचनया शेष्वेति विधिरूपव्यङ्ग्यार्थप्रतीतिः । एवं द्विकयोगान्तरे त्रिकादियोगे च स्वयमूह्यम् । |

# उल्लास ४

## रुचक

पृ.

२० (1) तस्मात् सर्वप्रमातॄणां यो रसनीयः [स] सर्वप्रमातृतावलम्बनेन रस्यते। अत एव नाटकमण्डपान्तःप्रविष्टाः सर्वे हृदयसंवादभाजो भवन्तीत्युच्यन्ते।

२१ (2) प्रेमार्द्रा इत्यनुवादेन परिचयादुद्गाढरागोदया भवेयुरिति विधेयम्। लयस्तन्मयत्वम्। निशान्तोऽन्तःपुरम्। सख्युर्भावः सख्यम्, तेनोपदेशः। जीवितप्रियेत्यामन्त्रणपदद्वयम्, प्रियेति तु सुहृद्विशेषणत्वे प्रियसखैरित्यत्र( स्त्र )विशेषणं न वाच्यम्।

२२ (3) मरणम[? मा]दीर्घकालप्रत्यापत्तिरितिकेचित्। मृङ् प्राणत्यागे इति धात्वर्थविचारा विषभक्षणपाशकरणादीनीत्यन्ये।

२२ (4) सुप्त इवेति प्रार्थनापराङ्मुखः।

३१ (5) संस्तरस्तृणादिशय्या। प्रस्तरः पाषाणः। एवमपि चेन्मेघभयं तद्वस। व्यङ्ग्यं तु प्रहरचतुष्टयमप्युपभोगेन नात्र निद्रां कर्तुमुपलभ्यते, सर्वत्र ह्यत्राविदग्धाः, तदुन्नतपयोधरां मामुपभोक्तुं यदि वससि तदास्स्वेति वस्तु। अत्र वाच्यबाधनेन व्यङ्ग्यस्य स्थितित्वात् तयोर्नोपमानोपमेयभावः।

## सोमेश्वर

पृ.

४५ (1) सर्वप्रमातॄणां यो रसनीयः सर्वप्रमातृतावलम्बनेनैव रस्यते. अत एव नाटकमण्डपान्तःप्रविष्टाः सर्वे हृदयसंवादभाजो भवन्तीत्युच्यन्ते।

५०-५१ (2) प्रेमार्द्रा इत्यनुवादेन परिचयाद् उद्गाढरागोदया भवेयुरिति विधेयम्। लयस्तन्मयत्वम्। निशान्तोऽन्तःपुरम्। सख्युर्भावः सख्यम्, तेनोपदेशः। जीवितप्रिय इत्यामन्त्रणपदद्वयं प्रियेति सुहृद्विशेषणे। प्रियसखैरिति अस्त्रविशेषणं न वाच्यम्।

५४ (3) मरणमिति आदीर्घकालप्रत्यापत्तिरिति केचित्। मृङ्प्राणत्याग इति धात्वर्थविचाराद् विषभक्षणपाशबन्धादीत्यन्ये।

५९ (4) सुप्त इवेति प्रार्थनापराङ्मुखः।

६०-६१ (5) संस्तरस्तृणादिशय्या। मणं मनागपि। प्रस्तराः पाषाणाः। एवमपि चेन्मेघभयं तद् वस। उन्नयेति, उन्नतं मेघं प्रेक्ष्येत्यर्थः। व्यङ्ग्यं तु प्रहरचतुष्टयमप्युपभोगेन नात्र निद्रां कर्तुं लभ्यते। सर्वे ह्यत्राविदग्धाः, तदुन्नतपयोधरां मां दृष्ट्वा उपभोक्तुं यदि वससि तदास्स्वेति वाक्ये वस्तुमात्रम्। अत्र वाच्यबाधेन व्यङ्ग्यस्य स्थितत्वात् तयोर्नोपमानोपमेयभाव इति नालङ्कारो व्यङ्ग्यः।

---

# उल्लास ५

| पृ. | रुचक | पृ. | सोमेश्वर |
| --- | --- | --- | --- |
| ४० | (1) पश्यतामिति पश्यतः अनादृत्येत्यनादरे षष्ठी । | ८६ | (1) पश्यताम् इत्यनादरे षष्ठी । पश्यतः प्रियाननादृत्येत्यर्थः । |
| | (2) अद्याप्यहमुपेक्षित इत्यसहनत्वं तपसः । अभियुक्त उद्योगेनाक्षिप्तः । | ८७ | (2) तपो मुञ्चत्वेषा इति भगवतोपेक्षितमित्यसहनत्वं तपसः । विश्रब्धजल्पितमस्याः । शृणोमीति च रसिकः अभियुक्त उद्योगेनाक्षिप्तः । |
| | (3) जनस्थानं दण्डकारण्यञ्च । कनके मृगतृष्णा [कनकमृगे] भ्रान्तिश्च । वैदेही सीता, वै देहीति पदद्वयम् । लङ्काभर्तृ रावणस्य, अलम् (अल) ईषद्रूपत्वात्? कुत्सितरूपस्य च भर्तुः । वदनेषु दशसु इषुघटनाशरयोजनादि, चित्रोक्तिपरम्परासु च [घटना] । कुशलवौ सुतौ यस्याः सा सीता, शुभधनता च । | ८८ | (3) जनस्थानं इति जनानां स्थानं दण्डकारण्यं च । कनकमृगे तृष्णा भ्रान्तिश्च । वैदेही सीता, 'वै देहि' इति च पदद्वयम् । लंकाभर्तुः रावणस्य, अलं ईषद्रूपत्वात्, कुत्सितस्य भर्तुश्च । वदनेषु दशसु, इषुघटना शरयोजना विचित्रोक्तिपरंपरासु च । कुशलवौ सुतौ यस्याः सा सीता, शुभधनता च । |
| ४०–४१ | (4) अध्यारोपेणैव स्थित इति । न ह्यत्र वाच्य इव प्रतीयमानोऽर्थो वाक्यार्थतां लभते, विशेषार्थाभिधायिनो (°धानयो) रुभयार्थप्रतिपादकत्वाभावात् । | ८९ | (4) अध्यारोपेणैवेति । न ह्यत्र वाच्य इव प्रतीयमानोऽर्थो वाक्यर्थतां लभते विशेष्याभिधायिनोरुभयार्थप्रतिपादकत्वाभावात् । |
| ४१ | (5) एकान्तस्थितोऽप्युदासीन इत्यच्युतपदद्योत्यम् । दर्शनेन किं तृप्तिरुत्पद्यते उपभोगेनैवोत्पद्यते । हतजन इति लोकस्तावदन्यथा मन्यते । तत्र किमात्मानं वञ्चयावः? आमन्त्रणं ज्योक्करणम् । | ९० | (5) अच्युतः विष्णुः अक्षरणश्च ॥ 'दर्शनेन' इति सुरतसेवाविकलेन । जनस्तावदेकान्तस्थयोरन्यथा मन्यते भवांस्तु अच्युत उदासीनः, तत् किमात्मानं वदयावः (? वञ्चयावः) । आमन्त्रणं ज्योत्करणम् । |
| | (6) हर्षशोकादीनामिति ते हि वाक्यार्थप्रतिपत्त्या क्रियन्ते, न च ज्ञापकस्य शब्दस्य कारकत्वं भवति । | १०० | (6) हर्षशोकादीनामिति । ते हि वाक्यार्थप्रतिपत्त्या क्रियन्ते, न च ज्ञापकस्य शब्दस्य कारकत्वं भवति । 'पुत्रस्ते जात' इत्यतो वाक्यार्थसामर्थ्याद् हर्षो जायत इति जननव्यतिरिक्तं ध्वननम् ॥ |

## रुचक

पृ.

४१ (7) श्रुतीति। "ऐन्द्र्या गार्हपत्यमुपतिष्ठत" इत्यत्र गार्हपत्योपस्थाने ऐन्द्र्या विनियोगस्तृतीयया प्रतिपादित इति श्रौतः।

(8) "बर्हिर्देवसदनं दामी" ति देवाश्रयदर्भच्छेदनेऽयं मन्त्रो दामीति लिङ्गादङ्गात् प्रतिपाद्यते।

४२ (9) आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते (?) इति अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाती"त्यत्रारुणादीनां परस्परं पुनर्वाक्यीयः।

(10) दर्शपूर्णमासप्रकरणे प्रयाजा उक्ता इति प्रकरणाद् दर्शपूर्णमासयोरेव क्रियन्ते। "अग्निरन्नस्यान्नपतिस्तस्याहं देवयज्ययाऽन्नस्यान्नपतिर्भूयासमि" ति मन्त्रत्रयादाग्नेयो याग उपांशुयागोऽग्नीषोमीययागश्चेति यागत्रयं क्रमेण स्थितम्। तत्र प्रथमतृतीयाभ्यां मन्त्राभ्यां लिङ्गाद्यदाद्यन्तौ यागावाक्षिप्येते द्वितीयेन मन्त्रेण द्वितीयो यागस्तत्स्थानवशात्। उद्गाता ऋत्विगध्वर्युरित्यादेरुद्गातेत्यादिसमाख्यावशात् सामवेदादावधिकृत इति निश्चीयते।
'ता' इति। उद्गायतीत्यादिसमाख्ययाऽन्वर्थं संज्ञाबलात् सामयजुर्ऋग्वेदेष्वधिकृत इति निश्चीयते तेष्वङ्गभाव इत्यर्थः।

## सोमेश्वर

पृ.

१०० (7) 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते।' अत्र गार्हपत्योपस्थाने ऐन्द्र्या ऋचो विनियोगस्तृतीयाप्रतिपादित इति श्रौतः। ऐन्द्र्या अङ्गभावः प्रतिपाद्यत इत्यर्थः॥

(8) 'बर्हिर्देवसदनं दामि' इति। देवाश्रयदर्भच्छेदनेऽयं मन्त्र इति। 'दामि' इति लवनलिङ्गाद् अनेन मन्त्रेण बर्हींषि लुनीयादिति प्रतीयते॥

१००-१०१ (9) वाक्यतो यथा–'श्वेतं छागमालभेत' अत्रैकवाक्योपादानाच्छ्वेतगुणस्य च्छागावच्छेदकत्वेन क्रियाङ्गभावो गम्यते। यथा वा 'अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्यत्र अरुणादीनां क्रमेण संबन्धः श्रौतः। अरुणैकहायन्यादीनां परस्परं पुनर्वाक्यीयम्॥

१०१ (10) दर्शपौर्णमासप्रकरणे 'समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजति' इति पञ्चप्रयाजा उक्ताः, ते च दर्शपौर्णमासयोरेव क्रियन्ते तदङ्गत्वमवगम्यत इत्यर्थः॥
'अग्निरन्नस्य' etc.
'दधिरस्यदब्धो'
'अग्नीषोमौ' etc.
इति मन्त्रत्रयात् आग्नेयो याग उपांशुयाज (? ग) आग्नीषोमीयो यागश्चेति यागत्रयं क्रमेण स्थितम्। तत्र प्रथमतृतीयमन्त्राभ्यां देवयज्यालक्षणाल्लिङ्गाद् आद्यन्तौ यागौ आक्षिप्येते, द्वितीयेन मन्त्रेण द्वितीयो यागस्तु, आग्नीषोमीयलक्षण उपांशुयाजः स्फुरदोष्ठमुद्रस्वरः स्थानवशात्॥ उद्गाताऽध्वर्युर्होता।

## रुचक

पृ.

४२ (11) अत्र सखीविषयं वाच्यम्। अस्या भ्रमरेण दष्टाधरेयं न परपुरुषेणेति सखीकृतसमर्थनरूपं व्यङ्ग्यं पतिविषयम्। अद्य मया समर्थितं पुनः प्रकटेऽङ्के त्वया खण्डनादि न कर्तव्यमित्युपपतिविषयम्। प्रियायाः सव्रणमधरं दृष्ट्वा रोषो भवति, अप्रियायास्तु दृष्ट्वा परिहासहेतुरानन्दो भवति, तद्वर्गो मा युष्माकं भृदिति (°भूयादिति) सपत्नीविषयम्। अत्रार्थे इदानीमेव किञ्चिद् वदति त्वं कुप्यसि ततः पादपतनादिना यदि प्रार्थ्यसे तत् सहस्व शोभस्वेत्यर्थ इति सखीविषयम्। नान्यथाऽस्याः संभावनीयमिति प्रातिवेश्मिकविषयम्। युक्तया मया संवृतोऽपराधः सख्या इति स्ववैदग्ध्यख्यापनं विदग्धविषयम्। अद्य मया समर्थितं, पुनस्त्वया सावधानया भवितव्यमिति सखीविषयमेव, अनया विना त्वं न भवसि, तव हीयं प्रिया, तदर्थापराधोद्घटनं न कार्यमिति पत्यु वैदग्ध्ये सति तद्विषयम्।

## सोमेश्वर

पृ.

१०४ (11) 'सहस्वेदानीं' इति वाच्यमविनयवतीविषयं, भर्तृविषयं तु अपराधो नास्तीत्यावेद्यमानं व्यङ्ग्यम्। तत्सपत्न्यां च तदुपालम्भतदविनयप्रहृष्टायां सौभाग्यातिशयख्यापनम्। 'प्रियाया' इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम्। सखीमध्ये इयता खलीकृतास्मीति लाघवमात्मनो न ग्राह्यं, प्रत्युतायं बहुमानः। सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यख्यापनं व्यङ्ग्यम्। अद्येयं तव प्रच्छन्नानुरागिणी मयेत्थं रक्षिता, पुनः प्रकटदशनरदनविधिर्न कार्य इत्युपपतिविषयं व्यङ्ग्यम्। नान्यथास्यां संभावनीयमिति प्रातिवेश्मिकविषयं व्यङ्ग्यम्। युक्त्या मया संवृतोऽपराधः सख्या इति स्ववैदग्ध्यख्यापनं विदग्धविषयं व्यङ्ग्यमित्याह।

---

# उल्लास ६

There is no Samketa of Rucaka on this Ullāsa.

---

# उल्लास ७

## रुचक

पृ

४५ (1) उपहतेति-तथा चोक्तम्—
"अत्रालुप्तविसर्गान्तैः पदैः प्रोतैः परस्परम् । ह्रस्वैः संयागपूर्वैश्च लावण्यमतिरिच्यते ॥

(2) संहितामिति (संहितेति) 'संहितैकपदवत् पादेष्वर्धान्तवर्जम्' इति काव्यसमयः

४६ (3) रावण इति जगदाक्रन्दकारित्वाद्यर्थान्तरसंक्रमितवाच्यः ।

(4) रक्ता सानुरागा प्रसाधिता (प्रसादिता) अर्जिता भूयैः, रक्तेन मण्डिता भूश्च यैः । विग्रहो वैरं शरीरञ्च । स्वस्थाः कुशलिनः स्वर्गस्थाश्च । पृथुकानां बालानां ये आर्ताः स्वरास्तेषां पात्रं,पृथूनि कार्तस्वरस्य सुवर्णस्य पात्राणि भाजनानि च यत्र । भुवि उषितो भूषितोऽलङ्कृतश्च । विलसत्कैः गर्तसम्बन्धिभिः पांशुभिर्गहनं विलसन्तीभिः करेणुभिर्व्याप्तम् (व्याप्तञ्च).

४७ (4a) [आत्मारामा इति]. देहबुद्धिप्राणशून्यरूपमितप्रमातृतानिमज्जनेनापरिमितबोधरूपे आत्मनि ये रमन्ते । भेदसंसर्गाभ्यां ज्ञानविकल्पस्तस्मान्निष्क्रान्तः
"योगमेकत्वमिच्छन्ति वस्तुनोऽन्येन वस्तुना" इत्युपपादितदिशा ध्येयेन सह समापत्तिः समाधिः । तमः अशुद्धोऽध्वा, ज्योतिः शुद्धोऽध्वा । पुराणो घटादिसिद्धेः पूर्वसिद्धेः, आनन्दरूपतया प्रकाशमानश्च ।

## सोमेश्वर

पृ.

१३५ (1) उपहतेति ॥ यदाह कुतुकः–
अत्रालुप्त to रिच्यते ॥

(2) 'संहितैकपदवत् पादे स्वर्धान्तवर्जम्' इति काव्यसमय इत्याह संहितामिति ॥

१६१ (3) तथा हि रावण इति जगदाक्रन्दकारित्वाद्यर्थान्तरसंक्रमितवाच्यो .

१६९ (4) रक्ता सानुरागा प्रसाधिता अर्जिता भूः यैः, रक्तेन मण्डिता भूश्च यैः । विग्रहः वैरं 'शरीरं' च । स्वस्थाः कुशलिनः स्वर्गस्थाश्च । पृथुकानां बालानां ये आर्ताः स्वरास्तेषां पात्रम् । पृथूनि कार्तस्वरस्य स्वर्णस्य पात्राणि भाजनानि यत्र । भुवि [illegible] । [illegible] पांसुभिर्गहनम् । विलसन्तीभिः करेणुभिर्व्याप्तं च ।

१६९ (4a) 'आत्मारामे'ति । देहबुद्धिप्राणशून्यरूपमितप्रमातृतानिमज्जनेन अपरिमितबोधरूपे आत्मनि ये रमन्ते । भेदसंसर्गाभ्यां ज्ञानं विकल्पः तस्माद् निष्क्रान्तः । *भेदज्ञानमिदं ध्येयमेतत्तद्गुणमेतत्क्रियमिति, यथा 'गौः शुक्लश्चलः' इति । प्रत्यक्षमेवैकं तत्र व्याप्रियत इत्यर्थः–'योगमेकत्वमिच्छन्ति वस्तुनोऽन्येन वस्तुना' इत्युपपादितदृशा ध्येयेन सह समापत्तिः समाधिः । तमः अशुद्धोऽध्वा, ज्योतिः शुद्धोऽध्वा । पुराणः घटादिसिद्धेः पूर्वं सिद्धः । अनिदं प्रथमतया प्रकाशमानश्च ॥

---

* This passage in S is to be noted for its elaboration from भेदज्ञानं to इत्यर्थः

## रुचक

पृ.

४७ (4b) षडधिकेत्यादि-शक्तीनामिच्छाज्ञानक्रियाणां ब्राह्म्यादीनां वामादीनां भूचर्यादीनां करणेश्वरीणा(?) मकारादिरूपामृतादीनामेवंविधानामन्यासामपि फलभेदादारोपितभेदपदार्थवपुषां नाथः प्रभुर्न्यग्भावनोद्भावनात्। आक्षिप्तनमस्कारो जयत्यर्थ इति। देहादिमितप्रमातृतानिमज्जनात् प्रबोधप्रमातृभावोन्मज्जनेन समाधि(वि)गामी(शामी)त्यर्थः। न च शक्तयः परस्परपरिहृतवपुषोऽपि त्वेकैकस्याः शक्तेः सर्वशक्त्यात्मतेत्याह— शक्तिभिः परिणद्ध इति—परितः समन्ताद् बद्धः, तेनेशित्रादिदशायामपि ज्ञात्रादिवपुः। न चासौ दूर भवतीत्याह-षडधिकेति। षड्भिरधिका दश षोडश या नाड्यस्तासां यत् चक्रं हृत्स्थानचक्रवन्नाड्यादिरूपेण स्वरूपं तन्मध्ये स्थितः स्थितिमान् विश्रान्त आत्मा अ(म-)विकलं चिदात्मरूपं यस्य। उक्तं नन्दशिखायाम्। "हृद्योगं देवि वक्ष्यामि विस्तरेण शृणुष्व तम्। विन्दुर्नादः शिवश्चैव तत्रैव निवसन्ति ते" त्यादि अथवा हृदये (?) (ततः) लक्षयेच्चक्रं (चक्र ?) "राजानमेकं तत् षोडदारक" मित्यादि। इडा to वायुसमाश्रिता इत्यादि

५० (4c) ... हृदि हृच्चक्रे विशिष्टं निहितं स्वातन्त्र्येणोल्लासितं रूपं ज्योतिरादिरूप आकारो येन। एवंस्वरूपोऽसावित्येतत् प्रतिपादनञ्च न विफलमित्याह-सिद्धिद इति। तं विदन्ति यथावज्जानते तथाभूतप्रकाशात्मना प्रकाशन्ते ये तेषाम्। सिद्धीः परापरमुक्ति-

## सोमेश्वर

पृ.

१६९ (4b) 'षडधिके'त्यादि। 'शक्तीनां' इच्छाज्ञानक्रियाणां ब्रह्मण्यादीनां वामा-(पृ १७०)-ज्येष्ठादीनां परादीनां भूचर्यादीनां करणेश्वरीणां अकारादिरूपामृतादीनां, एवंविधानामन्यासामपि फलभेदाद् आरोपितभेदपदार्थवपुषां 'नाथो' न्यग्भावनोद्भावनप्रभुः। जयति आक्षिप्तनमस्कारार्थो जयत्यर्थः। देहबुद्धिप्राणपुर्यष्टादिमितप्रमातृतानिमज्जनात्प्रबोधप्रमातृभावोन्मज्जनेन समाविशामीत्यर्थः॥ न च शक्तयः परस्परपरिहृतवपुषः, अपि तु एकैकस्याः शक्तेः सर्वशक्त्यात्मतेत्याह - 'शक्तिभिः'॥ परिणद्धः परितः समन्ताद् बद्धः। तेनेशित्रादिदशायामपि ज्ञात्रादिवपुः। न चासौ दूरे भवतीत्याह 'षडधिके'-ति। षड्भिरधिका दश षोडश या नाड्यः, तासां यच्चक्रं हृत्स्थाने। चक्रं च नाभ्यादिरूपेण स्वरूपं तन्मध्ये स्थितः स्थितिमान् विश्रान्त आत्माऽविकलं शिवात्मकं रूपं यस्य। यदुक्तम् इडा to वायुसमाश्रिताः॥ इत्यादि*

१७० (4c) हृदि हृच्चक्रे विशिष्टं निहितं स्वातन्त्र्येणोल्लासितं रूपं ज्योतिरादि [त्य] रूप आकारो येन॥ एतत्प्रतिपादनं च न निष्फलमित्याह-सिद्धिद इति।

१७० (4c) सिद्धीः परापरभुक्तिमुक्तिरूपा ददाति यः। तं विदन्ती यथावज्जानते तेषाम्॥ न चासावाग-

* In R the explantion is further elaborated by quotations etc pp 48, 49, 50 This means that S. has taken only as much as is necessary for explanation. and not put in the whole Tantra lore, as R does

| रुचक | | सोमेश्वर | |
|---|---|---|---|
| पृ. | | पृ. | |
| ५० (4c) | भुक्तिरूपा ददाति यः। न चासावागमोपपत्तिभ्यामेव सिद्धो यावत् स्वप्रकाशप्रत्यभिज्ञातोऽपीत्याह – अविचलितेति (अविचलित इति) Quotations about चत्वारो योगिनः पृ. ५०१. तेनाविचलितमनन्यध्येयं मनश्चित्तं येषां तैः साधकैः सिद्धतमं पदं साधयितुमुद्यतैर्मृग्यमाणः साक्षात्क्रियमाणः यद्यपि प्रमात्रैकवपुषः स्वप्रकाशस्यानुपपद्यमानमिवानुपयुज्यमानं प्रमाणं यस्य तस्यास्य दर्शनक्रियाकर्मभावो न भवति तथापि दृश्यमानघटादिपदार्थवदपरोक्षता प्रतिपादनार्थमुपचारेणोक्तम्। | १७८ (4c) | मोपपत्तिभ्यामेव सिद्धो, यावत्स्वप्रकाशः प्रत्यभिज्ञातोऽपीत्याह अविचलितेति। अविचलितमनन्यध्येयं मनश्चित्तं येषां तैः साधकैः सिद्धतमपदसाधयितुमुद्यतैर्दृश्यमानः साक्षात् क्रियमाणः॥ |

---

## उल्लास ८

| रुचक | | सोमेश्वर | |
|---|---|---|---|
| पृ. | | पृ. | |
| ५३ (1) | (श्रव्यत्वमिति) श्रव्यमिति भासते-तदुक्तं "श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते।" * | २०३ (1) | श्रव्यत्वमिति 'श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते' इति भामहोक्तं माधुर्यलक्षणमोजःप्रसादयोरप्यस्तीति सजातीयव्यावृत्त्यभावाद् न तल्लक्षणं माधुर्यस्य। |
| ५४ (2) | आख्यायिकायामिति-विकटबन्धप्रधाना आख्यायिका सुकुमाररचनाप्राया तु कथेत्यनयोर्भेदः। | २११ (2) | आख्यायिकायामिति। विकटबन्धप्रधानाऽनागतार्थशंसिवक्त्रापरवक्त्रादिनोच्छ्वासादिना संस्कृतगद्येन च युक्ता आख्यायिका,...... सुकुमाररचनाप्राया गद्येन पद्येन वा सर्वभाषा धीरशान्तनायका कथा। |

---

* Note 5 "Bhāmaha's Kāvyālaṅkāra II 3 The printed editions read श्रव्य नातिसमस्तार्थ काव्यं मधुरमिष्यते। This line, it appears, is differently read by different commentators and annotators "

The point to be noted is that here both R & S. agree in the reading.

# उल्लास ९

| पृ. | रुचक | पृ. | सोमेश्वर |
|---|---|---|---|
| ५५ | (1) सञ्चारीति—सती[ः] साध्वीर्ना-गीर्विभर्ति पोपयति या उमा तां याति सम्वध्नाति यः, सन्ना अरीभा शत्रूणां गजा यत्र तथा-भूतो रणो यस्य, तथा अमायो मायाशून्यः, ततः सार्व-भौमो भवति । | २३६ | (1) सञ्चारीति । सतीः साध्वीर्नारी-र्बिभर्ति पोपयति या उमा तां याति संवध्नाति यः शिवः । तथा सन्ना अरीभाः शत्रुगजा यत्र तथाभृतो रणो यस्य । अमायो निर्दम्भः । संदंशः । |
| | (2) विना अयं etc | | (2) विना अयमिति । कश्चित् कंचिदाह यमेन etc |
| ५६ | (3) सन्वारम्भेति (सम्वन्धनेति) स तु महापुरुषः आरं etc. | | (3) सन्वेति etc |
| | (4) यस्यानतः etc. | | (4) यदानतः यस्या आनतः etc |
| | (5) सरस्वती वागीश्वरी etc | | (5) सरस्वतीति वागीश्वरि etc |
| | (6) ससार जगाम सा कंदर्पेण etc. | २३८ | (6) ससारेति ससार प्रववृते etc. |
| | (7) भ्रमराणां राज्य । [पराजित]-परिभूतं etc * | | (7) भ्रमरपङ्क्त्यापराभूतं etc * |
| ५७ | (8) अन्यदिति यथा-विविधधवना † etc | २३९ | (8) अन्यदिति यथा-विविधधव[व] |
| | (9) विधाविति—विधुर्विधिश्चेत्यु-कारेकारयोः श्लेषः । | | (9) नानानागर्द्धनानेत्यादौ च ।§ अत्र स्थाणुपक्षे-विधुश्चन्द्रो वि-धिश्च दैवमित्युकारैकारयोरक्ष-रयोर्भङ्गेन श्लेषः । |
| | (10) पृथुकानां बालानां etc. | | (10) पृथुकानां बालानां etc |
| | (11) भक्तीति-नीते हितप्राप्तये etc | | (11) भक्तीति । अत्र 'नीता' इति ईहितप्राप्तये etc |
| | (12) महदे उत्सवदे, सुरैः सन्धा-नं यत्र, [मे मम] तम् अव रक्ष, समासङ्गम्, आगमाहरणे आम्नायस्वीकारे, हर निवा-रय, बहु प्रभूतं [सरणं] प्रसर-णं यत्र तम्, चित्तस्य मोहम-ज्ञानम्, अवसरे काले उमे | २४० | (12) तत्र संस्कृतप्राकृतयोः, यथा—महेति । कश्चिद् ध्यानानीतां गौरीं प्रत्याह । महदे उत्सवप्रदे सुरे सन्धा प्रतिज्ञा यत्र, देव-विषयमित्यर्थः । मम तमुत्कृष्ट-म् । अव रक्ष । समासङ्गं अभि-प्रेतं आगमाहरणे आगमस्वी-कारे । तथा हर निवारय । बहु प्रभूतं सरणं प्रसरणं यत्र तं चित्तस्य मोहमज्ञानं अवसरे |

* Similarities in 1–7 are usual and to be expected, and therefore not very useful as evidence

† Here the whole verse and its explanation.

§ Only a part quoted, no further explanation

## रुचक

पृ

५७ (12) गौरि सहसा झगित्येव। अस्यार्थः मम देहि रसं धर्मं तमोवशाम् (उमेवशाम्) आशां, गमागमात् संसारात्, हरणः, हरवधु शम्भुपत्नि, शरणं त्वं चित्तमोहः अपसरतु मे, सहसा बलेन।

(13) वक्ष्यतीति धारयिष्यति कथयिष्यतीति चेति वहिवच्यो रूपम्। कृदिति कृन्तति करोति च।

(14) ....सहस्रमिति क्रियाविशेषणम्। स्यां स्यादिति च नन्दयी[? ती]ति नन्दितानन्दिनो गणविशेषस्य भावः इति तद्धितकृत्प्रत्यययोः।

५८ (15) हे हर त्वं etc

(16) गोत्रशब्दः कुलपर्वतयोः etc

(17) सहकलकलेन etc.

(18) इहापीति शब्दालङ्कारमध्ये।

(19) पाता रक्षिता etc

(20) मारारिर्हरः etc अनेन श्लोकद्वयेन खड्गबन्धः प्रस्तारो यथा...*

(21) सरलेति etc। एष मुरजः। तथा हि पादचतुष्टयेन पंक्तिचतुष्टये कृते etc.

६० (22) अत्र न केवलमधोऽधःक्रमेण स्थितानां पादानां प्रातिलोम्येन व्यवस्थितिर्यावदर्धभ्रमस्यापि। तत्र हि प्रथमादिपादाद्याक्षराणि चत्वारि चतुर्थादिपादान्त्याक्षराणि चेति प्रथमः पादः। प्रथमादि यावद्

## सोमेश्वर

पृ.

२४० (11) काले उमे गौरि सहसा झगित्येव॥ प्राकृतेऽन्योऽर्थः। मम देहि रसं धर्मं तमोवशां तमः परिभूतामाशां गमागमात् संसाराद् हर। ण इति नः। तथा हे हरवधु शम्भुपत्नि शरणं त्वम्। चित्तमोहोऽपसरतु मे सहसा।

(13) वक्ष्यतीति। धारयिष्यति कथयिष्यति च। अत्र वहिवच्योः। कृन्तति-करोत्योश्च प्रकृत्योर्भङ्गः।

२४१ (14) 'सहस्रम्' इति क्रियाविशेषणम्। 'स्यां स्याद्' इति च। नन्दतीति। नन्दिता नन्दिनो गणविशेषस्य च भाव इति तृच्-त-प्रत्यययोः श्लेषः।

(15) हे हर etc

(16) गोत्रशब्दः कुलपर्वतयो etc.

२४३ (17) सहकलकलेन etc.

२४४ (18) 'इहापि' इति शब्दालंकारमध्ये।

(19) पाता अलं पर्याप्तं etc

२४६-४७(20) मारारिः शिवः etc एतेन श्लोकद्वयेन खड्गः। तथा हि द्राढिकान्तरे etc

(21) सरलेति etc। एष मुरजबंधः। तथा हि पादचतुष्टयेन पङ्क्तिचतुष्टये कृते etc.

२४८ (22) अत्र न केवलमधोऽधःक्रमेण स्थितानां पदानां प्रातिलोम्येनापि स्थितिर्यावद् अर्धभ्रमस्यापि। तत्र हि प्रथमादिपादाद्यक्षराणि। चतुर्थतृतीयद्वितीयप्रथमपदाद्यमाक्षराणि च प्रथमाः प्रथमपादः। प्रथ-

* F N. 18 "A blank covering six lines of 26 to 28 syllables each is shown here in the Ms Māṇikyacandra and Śrīdhara who have in this place reproduced verbatim the remarks of Rucaka help us in restoring the blank portion which would be like this — द्राढिकान्तरे etc"

## रुचक

पृ.

६० (22) द्वितीयाक्षराणि चत्वारि चतुर्थादिपादसप्तमा(सप्ता)क्षराणि चेति द्वितीयः पादः। प्रथमादि यावत्तृतीयाक्षराणि एवं चतुर्थादि यावत् षष्ठाक्षराणि तृतीयः पादः। चतुर्थपञ्चमौ चतुर्थः पादः। इह च तदेवोपलभ्यते इत्यर्धभ्रमस्याप्यवस्थानात् सर्वतोभद्रम्।

(23) अरीणां वधं ददती ईहा येषां तादृशाः शरिणो धानुष्कास्तानीरयन्ति ये, सूता वन्दिनः, सतामानत्येत्युक्ततया स्थिरतायामगः पर्वततुल्यः। अङ्गनेष्वारामा उपवनानि। अत्रैकार्थतया प्रतिभातौ देहशरीरशब्दौ सार्थकौ सभङ्गौ सारथिसूतशब्दौ सार्थकावभङ्गौ' दानत्यागशब्दावनर्थकौ सभङ्गौ अङ्गना रामा इत्येतावनर्थकावभङ्गौ, देहशरीरवदिह शब्दयोर्भङ्गाभावात् (भङ्गभावात्)।

(24) उपलभ्यमानसुपामपि शब्दानामुपरि पौनरुक्त्यं प्रतिभासते इत्यभिसन्धायोदाहृतं तथेति। सुमनसः शोभनचित्तस्य राज्ञः, सुमनसो देवा विबुधाश्च। तत एवात्रैकार्थताभ्रमः।

(25) तनु स्वल्पं, करिकुञ्जरा वारणश्रेष्ठाः "वृन्दारकनागकुञ्जरैः पूज्यमानमिति समासः। रक्ताश्छुरिताः। बहुलमपि पुनरुक्तवदाभासे (क्वाभासे) लक्ष्यत इत्युक्तं तेज इत्यादि-तेजसो धामाश्रयस्तेजस्विनस्तेषां मह उत्सवः, इन्द्रः स्वामी, हरिः सिंहः, जिष्णुर्जयनशीलः।

## सोमेश्वर

पृ.

२४८ (22) मादिपादद्वितीयाक्षराणि च चतुर्थादिपादसप्तमाक्षराणि च द्वितीयपादः। एवं तृतीयषष्ठाक्षरैस्तृतीयः पादः, चतुर्थपञ्चमैश्चतुर्थः पादः। इह च सर्व [त] देव उपलभ्यत इति अर्धभ्रमस्याप्यवस्थानात् सर्वतोभद्रम्। यदुक्तम्-तदिदं सर्वतोभद्रं भ्रमणं यदि सर्वतः॥

२५१ (23) अरिबधदा ईहा चेष्टा येषाम्, एवंभूतान् शरिणो धानुष्कान् ईरयति यः। सूतो बन्दी। सतामानत्या हेतुभूतया स्थिरतायां सत्यामगः पर्वततुल्यः। अङ्गनेषु आरामा उपवनानि॥ अत्रैकार्थतया प्रतिभातौ देह-शरीरशब्दौ अनर्थकौ सभङ्गौ, सारथि-सूतशब्दौ तु सार्थकौ अभङ्गौ। तथा दानत्यागशब्दौ अनर्थकौ सभङ्गौ, अङ्गना रामा इत्येतौ त्वनर्थकौ अभङ्गौ, देह-शरीरादिशब्दवन्निजेनैव रूपेणावस्थिततयोरनयोर्भङ्गाभावात्।

(24) उपलभ्यमानसुपामपि शब्दानामामुखे पौनरुक्त्यं प्रतिभासत इत्यभिसंधाय 'तस्य' इत्युदाहृतम्॥ सुमनसः शोभनचित्तस्य। सुमनसो देवा विबुधाश्च। त एवेत्येकार्थताभ्रमः।

२५२ (25) तनु स्वल्पम्। करिकुञ्जरा गजश्रेष्ठाः। 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' इति समासः। बहूनामपि पुनरुक्तवदाभासो लक्ष्यते 'तेज' इति। तेजसो धामानि आश्रयाः तेजस्विनः, तेषां मह उत्सवः। इन्द्रः स्वामी हरिः सिंहः जिष्णुर्जयनशीलः।

## उल्लास १०

| पृ | रुचक | पृ. | सोमेश्वर |
|---|---|---|---|
| ६० | (1) यथा षष्ठीवत् उत्तरा तदेव विशिनष्टि । श्रुत्यैव च सम्बन्धमुभयाधारमभिधत्ते । तथैवायं यथेवादिः । सममेव साम्यं साधारणो धर्मः । तुल्यता द्विष्ठरूपसादृश्यम् । | २५५ | (1) यथा षष्ठी यत उत्तरा तदेव विशिनष्टि श्रुत्यैव संबन्धमुभयाधारमभिधत्ते, तथैव अयं यथा इवादिः । ... सममेव साम्यं साधारणो धर्मः । तुल्यता द्विष्ठरूपं सादृश्यम् । |
| ६१ | (2) अलङ्कारान्तरञ्चेति । तद्ध्यनुप्रासादि(°द्) श्लिष्टतरमपि, काव्ये यद्यव्यभिचारित्वेनैव तद्व्यवहारो गण्यते तदा तेन सहोपमाऽऽदीनां संकरसंसृष्टी स्यातामिति केवलतयैषां विषयो नावकल्प्येत । | २५८ | (2) अलंकारान्तरं चेति । तद्धि अनुप्रासादि श्लिष्टतरमपि काव्ये यदि अव्यभिचारित्वेनैव गण्यते, तदा तेन सहोपमादीनां संकरसंसृष्टी स्यातामिति केवलतयैव एषां विनावकल्पेत । |
| | (3) तदिति (तदेति) स चास्फुटतरो रसादिरर्थः, तथालङ्कारान्तरमिति-"नपुंसकमनपुंसकेने"त्यनेन नपुंसकैकशेषः । अस्फुटश्च रसादिर्गुणीभूतव्यङ्ग्यगृहीत इत्यस्फुटतरोऽवगृह्यते इति संस्पर्शपदेन ध्वनितम् । | | (3) तदिति । स चास्फुटतरो रसादिरर्थस्तथा 'अलंकारान्तरम्' इति नपुंसकैकशेषः । अस्फुटश्च रसादिर्गुणीभूतविषय इति अस्फुटतरोऽत्र गृह्यते, इति 'संस्पर्श'पदेनात्र ध्वनितम् । |
| ६१ | (4) मनो विषकल्पं विषसदृशमित्यर्थः । न तु विषमेव प्रकृत्यर्थसदृशेऽर्थे कल्पवादीनां स्मरणात् । उपमाया एव हीदमुदाहरणं, न तु रूपकस्य, प्रत्ययादमुतो समारोपाप्रतिपत्तेः ।* | २५९ | (4) 'विषकल्पम्' इति । ... ... 'ईषद् अपरिसमाप्तं विषम्' इति वचनवृत्त्या सामानाधिकरण्यरूपतया यद्यपि रूपकच्छायां भजते, तथापि प्रातीतिकेन रूपेण उपमैव । तथाहि अत्र विषसदृशं मनः इत्ययमर्थः प्रतीयते, न तु ईषद् अपरिसमाप्तं विषमेव इति ईषदपरिसमाप्तिविशिष्टे प्रकृत्यर्थसदृशेऽर्थे कल्पबादीनां स्मरणात् । |

* Here the change in order as well as wording is more significant than similarity in words and order The same is true as between S & M.

## रुचक

पृ.

६२ (5) असितेति - अत्रोपमानोपमेययोरेकपदानुप्रवेशः। पूर्वत्र वर्तते पृथङ्निर्दिष्ट इति विशेषात् पुनरुदाहरणम्।

(6) ..कुसुमेन सदृक्षमिति सदृक्षशब्दाभिधेयस्योत्कृष्टतरगुणत्वेनाप्राप्यताप्रतिपादनादुपमानत्वं बलादायातं, तस्य च साक्षादनिर्देशादुपमानस्यैव लोपः।

(7) मृगनयनेति-मृगनयने इव नयने यस्याः। अत्र गुणद्योतकोपमानशब्दानां त्रयाणां लोपः।

.. . . .. ...

यदा तु मृगशब्द एव लक्षणया मृगनयनवृत्तिस्तदा मृग एव नयने यस्या इत्युष्ट्रमुखवद्रूपकसमासस्यैव विषयो न त्वस्योपमासमासस्येति नास्ति स्थानमुपमायास्त्रिलोपिन्याः। अत एवोक्तं यदेति।

(8) उपमेयेनोपमानधुराऽधिरूढेन करणात्मना उपमा, उपमानस्योपमेयतापादन उपमेयोपमा।

६३ (9) सांगमिति—न [केवल] मत्र तस्यैव रूपणमपि तु तदङ्गस्यापि-अङ्गमत्रोपकरणमात्रं न त्वारम्भकमेव, लक्ष्याव्याप्तिप्रसङ्गात्।

(10) एवमिति—
विलसदमर to श्रियं वः।
तथा चोक्तम् - इदन्ते केनोक्तमित्यादि।

(11) श्लिष्टैः समानैः।†

## सोमेश्वर

पृ.

२६० (5) असितेति। अत्रोपमानोपमेययोरेकपदानुप्रवेशः, पूर्वत्र तु ते पृथग् निर्दिष्टे इति विशेषात् पुनरुदाहृतम्।

(6) 'मालतीकुसुमसदृशम्' इति सदृक्षशब्दाभिधेयस्य उत्कृष्टगुणत्वप्रतिपादनाद् बलाद् आगतस्य उपमानस्य साक्षाद् अनिर्देशाद् उपमानस्यैव लोपः।

२६२ (7) मृगस्य नयने इति प्रथमं तत्पुरुषः, ततो 'मृगनयने इव नयने यस्याः' इति सप्तम्युपमानोपमानपूर्वस्य समास उत्तरपदलोपश्चेत्यत्र गुणद्योतकोपमानानां त्रयाणां लोपः। यदा तु मृगशब्द एव लक्षणया मृगनयनवृत्तिः, तदा मृग एव नयने यस्या इति रूपकसमासस्यैष विषयः, न त्वस्य उपमासमासस्येति नास्ति स्थानमुपमायास्त्रिलोपिन्याः। अत एवोक्तं 'यदा समासलोपौ' इति। cf. मा. (11) p 350

२६४ (8) उपमेयनोपमानधुराधिरूढेन करणात्मना उपमा, उपमानस्योपमेयतापादनं उपमेयोपमा।

२७० (9) साङ्गमेतदिति सूत्रम्। न केवलं यत्र तस्यैव रूपणं, अपि तु तदङ्गस्यापि अङ्गमत्रोपकरणमात्रं, न तु आरम्भकमेव लक्ष्याव्याप्तिप्रसङ्गात्।

२७६ (10) एवमिति। आरोपपूर्वकोऽपह्नवोऽपह्नवपूर्वको वा आरोपः। क्रमाद् यथा—
विलसदमर to श्रियं वः।
इदं ते केनोक्तम् इत्यादि।

२७७ (11) श्लिष्टैः श्लेषवद्भिः समानैः।†

† M & J have not given समानै।

## रुचक

पृ.

६३ (12) राजशुकः कश्चिदुत्कृष्टजातिशाली शुकः ।

(13) मुखादिति–लोकप्रसिद्ध्यात्र मुखमाकृतिः अपेक्षितक्रियश्चैतदुपादानम् । जात्यात्रेदकमेतच्छरीरादेतदल्पतरं जातमित्यर्थः ।

(14) प्रतियातनं संशोधनम् ।

६४ (15) श्लेष इति-विशेष्यपदस्यापि श्लिष्टता । समासोक्तिरिति समानविशेषणत्वम् । सादृश्यमात्रमिति-प्रतीयमानेनापि केनचिद्धर्मेणानुगुण्यम् ।

(16) पुंस्त्वं पुरुषस्य धर्मः, तस्यैव चारुत्वश्च । अधः [पातालं, निकृष्टा गतिश्च] प्रणयनं याच्ञानिमित्तम् । न महानपि स्वल्पोऽपि पुरुषोत्तमो विष्णुः, सत्पुरुषश्च । एष न शब्दश्लेषः, अभिधाया एकत्रनियमान्नियन्त्रितत्वात् । नापि विशेष्यपदस्य । श्लिष्टत्वे शब्दशक्तिमूलो ध्वनिः । भगवद्वृत्तान्तस्यात्र वाच्यत्वात्, तस्य चाप्रक्रान्तत्वात् । प्रस्तुतार्थमुखेन यत्राप्रस्तुतोऽर्थो विशेष्यद्वारेणावगम्यते स तस्य ध्वनेर्विषय इत्युक्तम् । सत्पुरुषचरितमेवात्र वाच्यं प्रस्तुतश्च, तन्मुखेन चेतरार्थप्रतिपत्तिः । ततः शब्दशक्त्युद्भव एवायमिति चेत्, न; तस्य वाच्यत्वासंभवात् । न ह्युत्कृष्टतमस्यापि पुरुषस्य सत्यत एवास्ति शक्तिर्विश्वमुद्धर्तुम्, आक्षिप्यमाणस्य तु तस्य गुणस्य गुणवृत्त्या तद्वर्णनमविरुद्धं गुणभूतत्वादित्यप्रस्तुतप्रशंसैवैषा ।

## सोमेश्वर

पृ.

२८० (12) राजशुकः कश्चिदेव उत्कृष्टजातिशाली शुकः । M different राजशुको वरशुकः । (p 373)

२८१ (13) मुखाद् इति । लोकसिद्ध्यात्र मुखमाकृतिः । अपेक्षितक्रियं चैतदुपादानम् । एतत् तच्छरीरादल्पतरं जातमित्यर्थः ।

(14) प्रतियातनं शोधनम् ।

(15) श्लेष इति । विशेष्यपदस्यापि श्लिष्टता । समासोक्तिरिति । समानविशेषणत्वम् । सादृश्यमात्रमिति । प्रतीयमानेनापि केनचिद् धर्मेणानुगुण्यम् ।

२८१-८२(16) पुंस्त्वं पुंसो भावस्तस्यैव चारुकृत्यं च । अधः पातालं निकृष्टा गतिश्च । प्रणयनं to एकत्र नियन्त्रित्वाद् । to श्लिष्टत्वेऽपिशब्द° to इति ह्युक्तम् । सत्पुरुष° to पुरुषस्य विष्णोरिव विश्वोद्धरणशक्तिः सत्यत एवास्ति । आक्षिप्यमाणस्य तु तस्य गुणवृत्त्या to °सैवेयम् । पुरुषोत्तमस्य विशेष्यस्य विशेषणानां च श्लिष्टत्वात् श्लेषगर्भत्वम् ।

| पृ. | रुचक | पृ. | सोमेश्वर |
|---|---|---|---|
| ६४ | (17) पादा रश्मयः, पादौ चरणौ जडधामता शीतलतेजस्त्वं, मूर्खास्पदता च। | २८२ | (17) पादा रश्मयश्चरणौ च। जडधामता शीतलतेजस्त्वं मूर्खास्पदत्वं च। |
| | (18) आहो इति यद्यर्थे। कल्पः प्रौढिः। | | (18) आहो इति यद्यर्थे। कल्पः प्रौढः। |
| | (19) रसनाविपर्ययः असत्यभाषित्वमपि। चापलं शब्दोऽश्रोतव्यश्रवणमपि। मदो गर्वोऽपि। शून्यकरत्वमदातृत्वमपि। | २८३ | (19) रसनाविपर्ययो गजानां शापहेतुनोऽसत्यभाषित्वमपि। चापलमश्रोतव्यश्रवणमपि। मदो गर्वोऽपि। शून्यकरत्वमदातृत्वमपि। |
| | (20) एवमिति यथा व्यतिरेके। तत्र ह्येकस्य बहुभ्यो व्यतिरेकमाला। व्यतिरेकतो यथा—हरवन्न to कदाचिदसि॥ इति॥* | २८६ | (20) एवमिति। यथा व्यतिरेके। तत्र ह्येकस्य बहुभ्यो व्यतिरेके मालाव्यतिरेकता, यथा 'हरवन्न विषमदृष्टिः' इति॥ |
| ६५ | (21) तस्य च श्लिष्टत्वं भास्वरत्वस्य समारोपात् रवित्वस्य प्रतिपादनात्। | | (21) 'भास्वता' इत्यस्य श्लिष्टत्वं, भास्वतेव भास्वतेति भासुरत्वस्यारोपगत्या रवित्वस्य च प्रतिपादनात्। |
| | (22) निषेध इवेति। न तु निषेध एव, प्रधानस्य निषेधमुखेन विशेष एव तात्पर्यात्। अन्यत्र चोक्तम्–'प्रतिषेध इवेष्टस्य यो विशेषविधित्सयेति।'† | २९४ | (22) निषेध इवेति। न तु निषेध एव, किंतु प्राकरणिकस्यार्थस्य प्रस्तुत्वादेव प्रधानस्य वक्तुमिष्टस्य विशेषप्रतिपत्तये निषेधाभासः।' विधानार्हस्य निषेधः कर्तुं न युज्यत इति निषेधमुखेन विशेष एव तात्पर्यमित्यर्थः।§ |
| ६६ | (23) तस्याः फलस्य प्रकाशनं कविना प्रतिपादनं न तु भावनम् to ज्ञप्तिश्चोत्पत्त्यपेक्षया दवीयसी न विभावनां प्रयोजयति। भवतु वाऽत्रापि सामान्येन परस्परं बाधः, तथापि न विरोधरूपत्वं, हेतुफलभावविशेषमाश्रित्य प्रवर्तनात्, अस्यास्तदपवादत्वात्। | २९५-९६ | (23) सामान्येन विशेषमनपेक्ष्य फलप्रकाशनमिति कार्यस्य कविना प्रतिपादनं, न तु भवनकारणमन्तरेण कार्योत्पत्तेरसंभवात् to ज्ञप्तिश्चोत्पत्त्यपेक्षया दवीयसी न विभावनां प्रयोजयति. In (23) many phrases are identical, but the whole is a sort of expa- |

* P 65 See note 15 In the text R. discusses the order of verses S. follows the later version

† F. N Bhāmaha's Kāvyālamkāra II. 68.

§ Paraphrase of the verse of Bhāmaha

| रुचक | | सोमेश्वर | |
|---|---|---|---|
| पृ. | | पृ. | |
| | | | nded paraphrase. Then in what follows 'ज्ञप्त्यपेक्षः, ज्ञप्तिः and द्वीयसी are explained in the style of a commentary as 'ज्ञप्त्यपेक्ष इति,' 'ज्ञप्तिश्चेति,' 'द्वीयसी' इति । This is interesting because it suggests that S. after taking the passage from R comments upon the difficult words (p 296). भवतु वात्रापि सामान्येन परस्परं वाधस्तथापि न विरोधरूपत्वं हेतुफलभावं विशेपमाश्रित्य प्रवर्तनाद् अस्यास्तदपवादत्वात् । (cf. मा. 41 p 394–5) |
| ६६ | (24) गलिः कर्मण्यकुशलोऽत्यन्तमलीमसः (°मलसः) । | २९९ | (24) गली (? लिः) कर्मण्यकुशलोऽत्यन्तमलसः । |
| | (25) धाराधरः खड्गः । अनुरज्यत इत्यनुरागः शोणितकृतं शोणत्वमपि । स्नेहो रुधिरार्द्रत्वमपि । | ३०० | (25) धाराधरः खड्गः । अनुरज्यत इत्यनुरागः । शोणितकृतं शोणत्वं च । स्नेहो रुधिरार्द्रत्वमपि । |
| | (26) जडयति शीतलयति व्यामोहयति च । | ३०१ | (26) जडयति शीतलयति व्यामोहयति च । |
| | (27) कश्चिदिह प्रभेदः श्लेषवशादेव समासादितस्वभाव इति विरोधप्रतिभोत्पत्तिहेतुः श्लेषात्मक एव । ततः श्लेषेण सहास्य सङ्करत्वशङ्का न कार्य्या, भेदाभावात् । एवमन्यत्रापि परीक्ष्यम् । | ३०२ | (27) श्लेषवशादेव हि समासादितस्वभावः श्लेषात्मक एव विरोधस्ततः श्लेषेण सहास्य संकरत्वाशङ्का न कार्या, भेदाभावात् । एवमन्यत्रापि परीक्ष्यम् । This is preceded by a discussion with a quotation from उद्भट (p. 309). This is in fact an elucidation of रु' s remarks adopted by सो. |
| ६७ | (28) द्राघयित्वा दीर्घीकृत्य "प्रियस्थिरे"त्यादिना द्राघादेशः । | | (28) द्राघयित्वा दीर्घीकृत्य । प्रोथोऽश्वस्य मुखाग्रम् । तुण्डं मुख- |

| रुचक | | | सोमेश्वर | | |
|---|---|---|---|---|---|
| पृ. | | | पृ. | | |
| ६७ | (28) | प्रोथोऽश्वस्य मुखाग्रम् । तुण्डं मुखम् । | ३०२ | (28) | म् । The point here is that S takes only as many words for explanation as are taken by रु. |
| | (29) | विप्रलम्भो भ्रान्तिरपायो वा । | ३०६ | (29) | विप्रलम्भो भ्रान्तिरपायो वा । |
| | (30) | अत्रानुमानसद्भावेऽपि न तेन सह वाक्यार्थीभूतस्य हेतोः संसृष्टिव्यवहारः, उभयोरपि भिन्नदेशत्वात् । अनुमानन्तु हेतोरुत्थापकतयोपकारकमिति भवत्यङ्गाङ्गिसङ्करः, किन्तु हेतुलक्षणमत्रास्तीत्येतावदभिसन्धाय हेतोरिदमुदाहृतम् । | ३०८ | (30) | अत्र चानुमानसद्भावेऽपि to हेतोरिदमुदाहृतम् । (cf मा. (51) p 409 ) |
| | (31) | तदेवेति-पटीयस्त्वादनुभावस्य तदाकारतयैव तस्योत्पत्तेः । | ३०९ | (31) | एतदीयत्वाद् अनुभवस्य तदाकारतयैव तस्योत्पत्तेः । |
| | (32) | निरंशस्य वस्तुनो भेदसंसर्गयोरभावात् । तौ हि विकल्पस्यैव व्यापारः । स हि अभिन्नमपि वस्तु गौः शुक्लश्चल इत्येवं भिनत्ति, भिन्नमपि पदार्थजातमयं गौरयमपि गौरित्येवं संसृजति । | | (32) | निरंश to संसृजति । |
| | (33) | तस्येहाङ्गत्वादिति । अङ्गत्वेऽपि न रसवदलङ्कारः, अस्योदात्तस्य तदपवादत्वात् । | ३१० | (33) | तस्येति after पूर्वपक्ष-सत्यम्, अङ्गत्वेऽपि न रसवदलंकारोऽस्योदात्तस्य तदपवादात् । (cf मा (54) p 413 ) |
| | (34) | न पृथगिति - रुद्रटो हि— यत्रैकत्रानेकं वस्तु परं स्यात् सुखावहाद्येव । ज्ञेयः समुच्चयोऽसौ त्रेधान्यः सदसतोर्योगः ॥ इति सद्योगादिना रूपान्तरेणामुं पृथगलक्षयत् । | ३११ | (34) | न पृथगिति । रुद्रटो हि 'त्रेधान्यः सदसतोर्योग इति सद्योगादिना रूपान्तरेण पृथगलक्षयत्न तथा-त्रेति भावः । |
| ६७ | (35) | असतामिति तत्र नववयःप्रभृतेः सत्यपि सत्त्वे सर्व्वेषामपि सत्त्वाकथनमसत्त्वेनैव विरहिण्या भावितत्वात् । | | (35) | नववयःप्रभृतेश्च सत्यपि शोभनत्वे सर्वेषामपि अशोभनत्वकथनं, अशोभनत्वेनैव विरहिण्या भावितत्वात् । |

| पृ. | रुचक | पृ. | सोमेश्वर |
|---|---|---|---|
| ६७ | (36) तत्रेति-[तत्र] शशिनः शोभनत्वं प्रकृतिसौन्दर्यात् । अशोभनत्वं धूसरत्वोपादानात् । एवञ्चास्य सदसद्रूपस्य तादृशेनैव व्यापारेण योगादिह सदसद्योगः । शशिनि धूसर इति शोभनाशोभनत्वमुपदर्शितम् । | ३११ | (36) तथा हि-शशिनः शोभनत्वं प्रकृतिसौन्दर्यात् । अशोभनत्वं तु दिवसधूसरत्वादिति 'शशी दिवसधूसरः' इत्यस्य सदसद्रूपस्य तादृशैरेव 'गलितयौवना कामिनी' इत्यादिभिः सदसद्रूपैः समुच्चयः । |
| ६८ | (37) न वाच्यमिति । रुद्रटेन ह्युक्तम् व्यधिकरणे वा यस्मिन् to साविति । | ३१२ | (37) रुद्रटेन तु- व्यधिकरणे to सौ इति यदुक्तं तन्न वाच्यमित्याह । |
| | (38) क्रमेणेति प्रतीकानन्तरं- "श्रोणीबन्ध to यौवनेने"ति पाठः । आद्यार्धमेव श्लोकस्योदाहरणम् । | ३१३ | (38) क्रमेण उदेति ( उदा इति ) अनन्तरम् । श्रोणीवन्धः to यौवनेन ॥* इत्ययं पाठः । 'तनुतामेव मध्यभागः सेवते' अत्र एकस्य तनुतादेर्द्वये वृत्तिर्दर्शिता । आद्यार्धमेव च श्लोकस्योदाहरणम् । |
| ६९ | (39) निवेशितं चुम्बनैकसक्तं कृतम् । | ३१४ | (39) विम्वाधरे निवेशितम् । चुम्बनादिसक्तं कृतम् । |
| | (40) अञ्चित-आकृष्टः । | ३१५ | (40) 'अञ्चित-आकृष्टः' । |
| | (41) प्रकृतेति-क्वचित् प्रकृतनिष्ठं साम्यं यथा सदयं बुभुजे to वधूमिव ॥ इति समुच्चितोपमायाम् । क्वचित्[अ]प्रकृतनिष्ठं यथा कस्याञ्चित् तुल्ययोगितायां, क्वचिच्च तदुभयनिष्ठं यथाऽपह्नुत्यां, तच्चेह नास्ति, प्रकृतस्यैव सद्भावात् । | ३१७ | (41) न चैपेति । क्वचित्प्रकृतनिष्ठं साम्यं, यथा— सदयं बुभुजे to वधूमिव ॥ इति समुचि( ? च्चि )तोपमायाम् । क्वचिद् अप्रकृतनिष्ठं यथा कस्यांचित् तुल्ययोगितायाम् । अपह्नुतौ तु प्रकृताप्रकृतनिष्ठं सादृश्यम् । न च तथेहास्ति, प्रकृतस्यैव सद्भावात् । |
| | (42) व्यासङ्गो विरोधस्तस्माद् भङ्गो भयम् । | | (42) व्यासङ्गो निरोधः, तस्माद् भङ्गो भयम् । |
| | (43) अवगतं प्रतिपाद्येन ज्ञातम् । | ३१७-८ | (43) °प्रमाणान्तरावगतं प्रतिपाद्येन ज्ञातं° । |
| | (44) आर्यचरितं-शिष्टैरनुष्ठितम् । | ३१८ | (44) 'आर्यचरितम्' इति शिष्टैरनुष्ठितम् । |
| ६९ | (45) युवतिरेव कामस्यास्त्रमायुधम् । | ३१८-९ | (45) युवतिरेव कामास्त्रम् ।† |

* It seems, acc to R & S the verse 'श्रोणीबन्ध' etc should precede नन्वाश्रय° in K, P. See note 28 in R's Samketa, p 68

† Cf. M. (63) 424.

| रुचक | सोमेश्वर |
|---|---|
| पृ. | पृ. |
| ६९ (46) गौणे ह्युपचारे सादृश्यसम्प्रत्ययाद्वैचित्र्यम्। न तु शुद्धे, तद्विपर्ययात्। | ३१९ (46) ततो गौणलक्षणायां सादृश्यसंप्रत्ययाद्वैचित्र्यं, यथा इयं गेहे लक्ष्मीः etc. इत्यादौ अतिशयोक्तौ। यत्र तु आयुर्धृतं to पूजनम्। इत्यादौ कार्यकारणसंबन्धोपचारे शुद्धलक्षणासद्भावः। तत्र सादृश्याभावेन हेतुमात्रस्य वैचित्र्याभावान्न हेतुरलंकारः।* |
| (47) कोमलेति। यद्यप्यव्यभिचारितयैव च विकाशादीनां नैरन्तर्येण जननमिहोपमानप्रयोजनं व्यङ्ग्यं तदसुन्दरमपि गुणीभूतव्यङ्ग्यनिबन्धनं भवतीति च प्राक् प्रतिपादितमेव, तथाप्यलंकारचिन्तायाः प्रक्रान्तत्वादपह्नुत्यैवावधारणगर्भमिदमभिहितम्, अत एव तटस्थतयेवोक्तम्। समाम्नासिषुरिति–उद्भटादयः प्रत्यपादयन्निति ह्यत्रार्थः। | (47) कोमलानुप्रासेति। यद्यपि अव्यभिचारितयैव विकासादीनां नैरन्तर्येण जननमिहोपचारप्रयोजने व्यङ्ग्यं तद् असुन्दरमपि गुणीभूतव्यङ्ग्यनिबन्धनं भवतीति प्राक् प्रतिपादितमेव, तथापि अलंकारचिन्तायाः प्रक्रान्तत्वात् तद् अपह्नुत्यैवावधारणगर्भमिदमभिहितम्। अत एव तटस्थतयैव उक्तम् 'समाम्नासिषुः' इति उद्भटादयः प्रत्यपादयन्निति ह्यत्रार्थः। |
| ७० (48) अतिशयेनेति-अतिशयः कारणस्य कारणान्तरतो विलक्षणता। | ३२३ (48) अतिशयेनेति। अतिशयश्च कारणस्य कारणान्तरतो वैलक्षण्यम्। |
| (49) सिंहिकासुतः सिंहो राहुश्च। अत्र न परं शशेनात्मरक्षा समासादिता यावदेष स्वयमेवाधिगतमहाबाधः, स्वाश्रयबाधेनाश्रयणक्रियाध्वंसात्। | ३२५ (49) सिंहिकासुतः सिंहो राहुश्च, न परम्। शशेनात्मरक्षा न समासादिता यावदेष स्वाश्रयबाधेन आश्रयणक्रियाध्वंसात् स्वयमेवाधिगतमहानर्थश्च। |
| (50) विपुलेनेति-अत्र हीनेन गुरुकार्यं कृतमिति विषमत्वम्। एवमधिकोऽपि यः स्वल्पमपि प्रयोजनं न विदधाति तदपि विषमं यथा—<br>किं ददातु to त्रितयमात्रके॥<br>इति। | ३२६ (50) विपुलेनेति। अत्र हीनेन गुरुकार्यकरणाद्, विषमत्वम्। इत्यादावपीति, अपिशब्दाद्, यथा—<br>किं ददातु to त्रितयमात्रके॥<br>अत्र अधिकेनापि स्वल्पकार्यकरणाद् विषमत्वं ज्ञेयम्। |
| (51) माति वर्तते – अनेनाश्रयस्य महीयस्त्वमुक्तमन्यथा मानस्यासम्भवात्। | (51) 'माति' इति वर्तते अनेनाश्रयस्य महीयस्त्वमुक्तमन्यथा मानस्यासंभवात्। |

* This passage is an elaboration of रु

| रुचक | | सोमेश्वर | |
|---|---|---|---|
| पृ. | | पृ | |
| ७० | (52) सम्बन्धीति सम्बन्धि वक्रं, तेनेन्दोः सम्बन्धः समत्वात्। | ३२७ | (52) संबन्धि वक्त्रं तेन हीन्दोः संबन्धः समत्वात्। |
| | (53) अपाङ्गेति। अत्राङ्गकेन etc | ३२८ | (53) अपाङ्गेति। अत्र दृक्तरलत्वादिना etc † |
| ७०-७१ | (54) दृष्ट इति-दृशिरत्रोपलब्धिमात्रवचनः। स्मारिता इति-घटादिष्वपठितस्य स्मरतेर्मित्त्वेऽपि "मितां ह्रस्वः" इति [ह्रस्वः] तद्विधौ "वे"त्यस्यानुवृत्तस्य व्यवस्थितविभाषात्वात्। | ३२९ | (54) दृष्ट इति। दृशिरत्र उपलब्धिमात्रवचनः। तद्भवैः प्लाविनाम्भोभवैः कुहरुतैः कुहकुहशब्दैः नाभ्यादिनिम्नदेशोत्थैः। स्मारिता इति घटादिपाठे स्मरतेर्मानुबन्धत्वेऽपि 'न ह्रस्वो व्यवस्थितविभाषितस्य वा' इत्यस्यानुवृत्तेः। |
| ७१ | (55) अनयैव रीत्येति-अनेन बहुप्रकारं वैचित्र्यमस्य दर्शितम्। तेनोपमानस्योपमेयतोऽनुकम्प्यतामात्रप्रतिपादनमपि प्रतीपम्। यथा–वदनमिदं to कज्जलवादति॥ | ३३१ | (55) अनयैवेति। अनेन अस्य बहुप्रकारं वैचित्र्यं दर्शितम्। तेन उपमानस्य उपमेयताधानं विनानुकम्पनामात्रे प्रतिपादनमपि प्रतीपम्। यथा– वदनमिदं to कज्जलवत्॥ |
| | (56) धवलः कामुकोऽपि, रञ्जितं जनिताभिषङ्गं रागप्रसक्तिरपि। अत्र पूर्वार्धे विरोधः न तूत्तरत्र, भिन्नाधारतयैव रक्तारक्तत्वयोः प्रतीतेः। | ३३४ | (56) 'धवलोऽसि' इति। रञ्जितं जनिताभिष्वङ्गमपि। रागः प्रसक्तिरपि। अत्र पूर्वार्धे विरोधोऽनन्तरं भिन्नाधारतयैव रक्तारक्तत्वयोः प्रतीतिः। |
| ७२ | (57) अङ्गेत्यभीष्टामन्त्रणे, सैव नान्यादृशीया न चीयत इत्यध्याहृतेन यदा समन्वयः। | ३३५ | (57) अङ्ग इतीष्टामन्त्रणे। सैव नान्यादृशी या न चीयते। |
| | (58) यथासम्भवमिति–न सर्वेषामेव लक्षितानामपि तु केषाञ्चित्। तत्रापि तेषां मध्ये क्वचिद् द्वयोः क्वचित् त्रिचतुर्णामिति यथायोगम्। संसृष्टेश्च विषयभेदेन त्रिरूपाया अपि संसृष्ट्या चैकरूपयेति प्रागुक्तमभिधानं न विरुध्यते, नैरपेक्ष्यलक्षणस्य रूपस्याभिन्नत्वात्। सङ्करस्तु स्वरूपेणैव नानागतत्वेनावभासत इति युक्तस्तत्र त्रिरूपतया व्यवहारः। | ३३६ | (58) यथासंभवमिति न सर्वेषां लक्षितानां, अपि तु केषांचित्, तत्रापि तेषां मध्ये क्वचिद् द्वयोः क्वचित् त्रिचतुराणामिति यथायोगम्। संसृष्टेश्च विषयभेदेन त्रिरूपत्वेऽपि संसृष्ट्या चैकरूपयेति प्रागुक्तं न विरुध्यते, नैरपेक्ष्यलक्षणस्य रूपस्याभिन्नत्वात्। वक्ष्यमाणसंकरस्तु स्वरूपेणैव नानात्वेनावभासत इति युक्तस्तत्र त्रिरूपताव्यवहारः। |

† Here the passage is different in wording but is taken by M (66) p 436. This shows that M also borrows from S

## रुचक

पृ.

७२ (59) पूर्ववदिति – तथा ह्यत्र उपमाश्लेषस्योत्थापकतयोपकारिणी, श्लेषोऽपि तथैव, रूपकोत्प्रेक्षयोस्तैस्तु समस्तैः साक्षात् पारम्पर्येण च यथासम्भवमुपमोपकृता, तत्समकक्षतया, एवं तस्याः सचेतसां प्रचुरचमत्कृतिहेतुत्वात् ।

७२-७३ (60) मुख्येऽपीति – उपमापक्षे कलङ्क उपचार एवेति । न तदाश्रयणं युक्तं, तस्यागतिकत्वात् । अतिपातिनो जवेन व्रजन्तः सारावाः सशब्दा नदा यत्र तादृशीयं तटी भासते । अभिहतो दानवानां रासः सिंहनादो येनेति शम्भोः सम्बोधनम् । सा चेयं गजसंहतिः यूथमतिपाति विशेषेण परित्रायते । अविरतेन सन्ततेन दानेन मदेन वरा श्रेष्ठा, सारा स्थिरा, वनं दयते रक्षति या [दा] देङ् रक्षणे अवनं रक्षणं ददाति या ।

७३ (61) अभिधीयत इति – यद्यपि साधकत्वं बाधकत्वं चोभयमस्यास्ति तथापि प्रधानेन व्यपदेशा भवन्तीति न्यायाद् बाधकत्वेनैवास्य तु व्यपदेशो न्याय्यः, बाधकत्वस्य बलीयस्त्वेनोत्कटतया प्रतीतेः ।

(62) रूपष्टेति । यद्यपि साङ्गमिदं रूपकमखिलवाक्यव्यापि तथापि प्रत्यवयवं रूपकस्य सद्भावात्तु तथा व्यपदेश इत्येकपदानुप्रवेशोऽस्य न विरुध्यते ।

## सोमेश्वर

पृ.

३३८ (59) पूर्ववदिति । तथा ह्यत्र उपमाश्लेषस्य उत्थापकतया उपकारिणी । श्लेषोऽपि तथैव रूपकोत्प्रेक्षायाः (क्षयोः) । तैस्तु समस्तैः साक्षात् पारंपर्येण च यथासंभवमुपमा उपकृता । तदुपकृतैव सा सचेतसां चमत्कृतिं करोति ।

(60) मुख्येऽपीति । उपमापक्षे कलङ्के । उपचार एवेति । न च तदाश्रयणं युक्तं, तस्य अगतिकगतित्वात् । अतिपातिनो जवेन व्रजन्तः सारावा नदा यत्र । तादृशीयं तटी भ्राजते । अभिहतो दानवानां रासः सिंहनादो येनेति शम्भोः संबोधनम् । सा चेयं गजता यूथं गजसमूहम् । अतिपाति परित्रायते अविरतिना संततेन दानेन । वरा श्रेष्ठा । सारा स्थिरा । वनं दयते रक्षति या, अवनं रक्षणं वा ददाति ।

३४१ (61) ... यद्यपि साधकत्वं बाधकत्वं चोभयमपि अस्ति, तथापि 'बाधकत्वेनैव व्यपदेशा भवन्ति' इति न्यायात् बाधकत्वस्यैव प्राधान्यं, साधकत्वापेक्षया बलीयस्त्वेन उत्कटतया प्रतीतेः ।

३४२ (62) यद्यपि सावयवमिदं रूपकमखिलवाक्यव्यापि तथापि प्रतिपदं रूपकसद्भावात् तथा व्यपदेश इत्येकपदानुप्रवेशो न विरुद्धः ।*

---

* Cf. M. (77) p. 454.

| रुचक | | | सोमेश्वर | |
|---|---|---|---|---|
| पृ. | | | पृ. | |
| ७३ | (63) | तत्प्रभेदानामिति (प्रभेदेति) तस्य प्रभेदास्त्रयः प्रकारास्तेषां भेदास्तत्तदलङ्कारयोगेनावान्तरविशेषा उत्प्रेक्षावयवादयः। | ३४२ | (63) तत्प्रभेदेति। तस्य संकरस्य प्रभेदास्त्रयः प्रकाराः, तेषां भेदास्तदलंकारयोगेन अवान्तरविशेषाः। |
| | (64) | विशिष्टस्येति-यत्राश्रयस्य नित्यता नास्ति नित्यत्वेऽपि हि [तस्य] न तस्यान्वयव्यतिरेकौ निबन्धनम्, नित्यस्य व्यतिरेकाभावात्। | ३४३ | (64) विशिष्टस्येति। यत्र आश्रयनित्यता नास्ति नित्यत्वं हि यस्य न तस्य अन्वयव्यतिरेकौ निबन्धनमित्यस्य व्यतिरेकाभावात्। |
| ७४ | (65) | रमणमन्दिरं रतिवेश्म, रमणस्य प्रेयसो मन्दिरमिति तु व्याख्यायाम् अकारणमित्यसङ्गतं स्यात्। | | (65) 'रमणमन्दिरं रतिवेश्म'। 'रमणस्य प्रेयसो मन्दिरम्' इति व्याख्यायां तु 'अकारणं' इति असंगतं स्यात्। |
| | (66) | एकतरस्येति। यदि तु विपरिणमने लिङ्गवचसोऽपरस्याभिसम्बन्धस्तदाऽऽभ्यासलक्षणो वाक्यभेदः स्यात्। एवञ्चाव्यवधानेन प्रकृतार्थौ न प्रतीयते। | ३४५ | (66) यदि तु विपरिणामेन लिङ्गवचसोरपरस्यापि संबन्धस्तदा अभ्यासलक्षणो वाक्यभेदः स्यात्। द्वे वाक्ये स्यातामित्यर्थः। एवं च व्यवधानेन प्रकृतोऽर्थौ न प्रतीयेत। |
| ७४ | (67) | असदृश इति-कञन्तत्वादेकवचनत्वं क्विबन्तत्वाद् बहुवचनान्तश्च। मधुरत्वतया भृतो धृतः, मधुरताश्च बिभ्रति। दधत इति दध धारणे इत्यस्य दधातेश्च यथाक्रममात्मनेपदैकवचनबहुवचनया रूपम्। | ३४६ | (67) 'असदृश' इति टगन्तत्वाद् एकवचनान्तं, क्विबन्तत्वाद् बहुवचनान्तं च। 'मधुरतया भृतो धृतः मधुरतां बिभ्रती च'। 'दधते' इति एकवचनबहुवचनाभ्याम्। Elaboration of the point |
| | (68) | मज्जनं स्नानं ब्रुडनश्च। स्फुरन्नंशुकस्यान्तो यस्याः, स्फुरद्भिरंशुभिः कान्ता (च)। मकरकेतनः कामः समुद्रश्च। | | (68) मज्जनं स्नानं ब्रुडनं च। स्फुरन्नंशुकस्य अन्तो यस्याः, स्फुरद्भिरंशुभिश्च कान्ता। मकरकेतनः कामः समुद्रश्च। |
| | (69) | उच्चारितमिति-शब्दतः प्रादुर्भूतं यथा प्रत्यग्रेत्यत्र विविक्तकान्तत्वादि। | | (69) उच्चारितमिति शब्दतः प्रादुर्भूतं, यथा 'प्रत्यग्रे'त्यत्र विविक्तमूर्तित्वादिति। |
| | (70) | केवलस्येति असमासस्थस्य, समासत्वेऽसौ योग्यताद्यपि प्रतिपादयति। | ३४८ | (70) केवलस्येति, असमासस्थस्य। समासे तु असौ योग्यताद्यपि प्रतिपादयति। |
| | (71) | व्यक्तेर्लिङ्गस्य विशेषः पुंस्त्वं स्त्रीत्वञ्च। नायकतयेति (नायकनायिकातयेति) नायकश्च नायिका चेत्येकशेषः। | ३४९ | (71) व्यक्तेर्लिङ्गस्य विशेषः पुंस्त्वं स्त्रीत्वं च। नायकतयेति। नायकश्च नायिका चेति एकशेषः॥ |

## रुचक

पृ.
७४ (72) अन्येऽपीति - तद्यथा विरोधस्यासम्भवो यथा।
या घर्मभानोः to पटीयसी॥
इत्यत्र घर्मभानोस्तनयात्वादीनां शीतलत्वादीनाञ्च धर्माणां भिन्नाधारतया विरोध उक्तः। स च न सम्भवत्येकाश्रयतयैव तस्योत्पत्तेः, अन्यथाऽतिप्रसङ्गः स्यात्। यद्यपि यमुनायास्तज्जलादानाच्च तात्त्विकमेकत्वं तथापि शब्दसमर्पितमेतेषां नानात्वमन्वभिभूयते। अयं च विरोधः शाब्द एवेष्यते। तथा च तेषां भिन्नाश्रयतया तदवस्थ एव तस्यासम्भवात्; स चाभिहितवाच्यत्व एव पर्यवस्यति, एकाश्रयतया विवक्षितानां तेषाममुना वाक्येनाभिधानादिति।†

## सोमेश्वर

पृ.
३५०-५१ (72) अन्येऽपीति।
N B. after giving eight illustrations of other अलंकारदोषs S gives the one given by रु. पृ. ३५१
विरोधस्य असंभवः यथा—
या घर्मभासस्तनया to पटीयसी॥
अत्र विरोधस्यैकाधारतयैव उपपत्तिरित्युक्तम्। ततो घर्मभास्तनयात्वादीनां शीतलत्वादीनां च धर्माणां भिन्नाधारतयोक्तौ विरोधस्य असंभवः॥ ननु तस्या नद्या जलानां च तत्त्वत एकत्वमिति न दोषः। सत्यम्, शब्दसमर्पितं नानात्वमनुभूयतेऽयं च विरोधः शाब्द एवेष्यते॥†

---

† These parts of the Samketas of R S and M are interesting as showing a progressively intelligent way of finding new illustrations

# I

# काव्यप्रकाशवाचनायाः पाठान्तराणि

A = Palm-leaf ms of Jesalmer

B = Paper ms. of Gujarat Vidyasabha, Ahmedabad

C = Kāvyaprakāśā with the Samketa of Manikyacandra, A S S 1920, Poona.

D = Kāvyaprakāśa ed. by Jhalkikar 4th edition 1921, B O R I Poona.

## उल्लासः १

| | | |
|---|---|---|
| | A | in the middle of the board काव्यप्रकाशालङ्कार. |
| | B | काव्यप्रकाशः |
| | A | ॐ० ॥ ॐ नमो गणपतये । |
| | B | श्रीगणाधिपतये नमः । |
| 1 | B | °नुचिरां |
| 2 | B | धर्मादि |
| 3 | C. D. | insert तादृशी between तै. and ब्रह्मणो |
| 4 | C. D. | एव ' माह |
| 5 | B | भूतः |
| 6 | C. D. | विशेषः कश्चित् |
| | B | separates the sandhi °वा उप° |
| 7 | B | °मात्मनोवृत्त |
| | C. D. | °मात्मकलो |
| | | Read no. 7 on वृत्त° |
| 8 | B | °खड्गादेर्ले° |
| 9 | C | °दीनां च विम° |
| | B | विमर्शाद्व्युत्पत्तिः |
| 10 | B | प्रवृत्तिः । इति त्रयः |
| 11 | B | व्यत्यस्ताः |
| 12 | C | च |
| 13 | | A also might have in the beginning °अधम-शब्देन like B |
| 14 | C | प्राधान्येनाधमपदेन व्य° |
| 15 | B | मिद्या° |
| | | Read no 15 on मिद्यादु |
| 16 | C | adds वाच्यचित्रं यथा । विनिर्गतं .. . . |
| 17 | A. B. | drop इति श्री |
| | D | drops श्री |

## उल्लासः २

| | | |
|---|---|---|
| 1 | A | रूपं |
| 2 | C | नां परस्परसमन्व° |
| 3 | C | घरोवअरं |
| 4 | B. C. | तुमए |
| 5 | B. C. | सुहअं |
| 6 | B | मज्जु |
| 7 | B. C. | कए |
| 8 | C | विरइअं |
| 9 | B. C. | तुमए |
| 10 | B | मम |
| 11 | B | उव |
| 12 | C | णिप्पन्दा |
| | B | णिप्फंदा |
| 13 | B | बिसिणी |
| 14 | C | बलाआ |
| 15 | B. C. | णिम्मल |
| 16 | B. C. | मरगअ |
| 17 | B | परिट्ठिआ |

| No. | MS | Reading |
|---|---|---|
| 18 | B. C. | सुन्तिव्व |
| 19 | A | नि.स्पंद |
| 20 | B | omits च |
| 21 | C | कयाचित् |
| 22 | B C | स्वरूपमाह |
| 23 | B | adds पुरुषस्य after सकेतस्य |
| 24 | B | शब्दार्थविशेषप्रतिपत्तेर्° |
| 25 | A B | °श्वलतीत्यादीनां for चलो डित्थ इत्यादीनां |
| 26 | B | स्तु |
| 27 | C | द्विविध. |
| 28 | A | °पि द्विविधः सिद्ध. |
| 29 | C | द्विविधः |
| 30 | C | पदार्थप्राणदो |
| 31 | C | तत्र |
| 32 | B | drops नहि |
| 33 | A B | °पेण न गौ° |
| 34 | A | र्नागौ– |
| 35 | B | drops तु |
| 36 | B | drops सोयं |
| 37 | B C | °ज्ञारूपो यद° |
| 38 | B C | परमाण्वादीनां |
| 39 | B | drops तु |
| 40 | B | इत्यभिन्ना |
| | C | इत्याद्यभिन्ना |
| 41 | B | तंडुलपाकादि |
| 42 | C | पाकत्वादि |
| 43 | B | drops च |
| 44 | A B | °ध्यमाने डित्थाद्यर्थे वा – Read no 44 on डित्थाद्यर्थेषु |
| | B | has the same reading as A except च instead of वा |
| 45 | B | प्रदर्शितं |
| 46 | C | घोषाद्याधारत्वा° |
| | B | घोषाधिकरणत्वा° |
| 47 | A | drops घोष |
| 48 | C | न तथा |
| 49 | C | श्रुतिसचोदितम° |
| 50 | B | drops तु |
| 51 | C | °करणत्वसि° |
| 52 | C | मिश्रितत्वात् |
| 53 | B | प्रतिपत्तौ |
| 54 | B | साध्यवसानिका |
| 55 | A C | °थोऽभि° |
| 56 | B | adds the following as the first line–मानांतरविरोधे तु मुख्यार्थस्य परिग्रहे |
| 57 | C | तथात्वे |
| 58 | B C | सिद्धेर्लक्ष° |
| 59 | B | drops च |
| 60 | C | °ण पूर्वे आरोपा° |
| | B | °क्षण पूर्वमारोपा° |
| 61 | B | °योश्वान्य° |
| 62 | C | प्रयोजनम् |
| 63 | B C | °न्द्रार्था स्थूणेन्द्र. |
| 64 | B | क्वचित्तु स्व° |
| 65 | C | adds from अनायासेन to प्रतीयते । |
| 66 | B C | अव्यङ्ग्या, गूढव्यङ्ग्या, अगूढव्यङ्ग्या च । |
| 67 | B | चेति |
| 68 | C | °क्षणयाशब्द° |
| 69 | C | °प्रतीतिरपि |
| 70 | B | बाधा° |
| 71 | B | तदा |
| 72 | B | बाधा° |
| 73 | C | एवमपि |
| | B | प्रतिपत्ति |
| 75 | C | व्यंजनयेत्याह |
| | B | व्यंजनेनेत्यत आह |
| 76 | C | निगदेन |
| 77 | B | drops ये |
| 78 | B C. | °ध्वनन द्योतनादि° |
| 79 | B | °दशा |
| 80 | B | drops इत्युच्यते |
| 81 | B | °रथी |
| 82 | B | °पुरारेरिति° |
| 83 | C | चित्रभानुर्विभातीति |
| | B | चित्रभानुर्विभातुर्विभातीतिदि° |
| 84 | B | दिवा |

| | | |
|---|---|---|
| 85 | A | इव न |
| 86 | B | मेत्तत्थणिया |
| | C | °त्थणिआ |
| 87 | A C | °वस्था |
| 88 | B | हिं दिअ हेंहिं |
| | C | हि दिअ एहिं |
| 89 | B | adds आदिशब्दात् after नयादयः |
| 90 | B | °र्थातरेभिधाय |
| 91 | B | °नियंत्रिते |
| 92 | B | यत्किंचिद° |
| 93 | C | च |

## उल्लासः ३

| | | |
|---|---|---|
| 1 | B C | अइपिहुलं° |
| 2 | C | तुरिअं |
| 3 | B C | अस° |
| 4 | B | °दूसहा° |
| 5 | C | ओण्णिइं |
| 6 | | no variant |
| 7 | C D | °सिअं |
| 8 | B | °भायणीए |
| | C | °भाइणीअे |
| 9 | B C | णिमिअं |
| 10 | B C | एण्हि° |
| 11 | B C | स च्चेअ |
| 12 | B C | कबोला |
| 13 | A | कदलि |
| 14 | B | रत्यर्थं |
| 15 | C | अणद्दमणा |
| | B | अणोल्लमणा |
| 16 | C | सअलम्मि |
| 17 | B | संज्ञाए |
| 18 | C | °झाइ होइण वहोइ |
| 19 | B C | एमेअ |
| 20 | C | °ति कयाचित्ति° |
| 21 | B | प्रदेश |
| 22 | C | °स्त्वयाऽभिसार्यतामि° |
| 23 | B | °चिद्योत्यते ( for निवेद्यते ) |
| 24 | B C. | भाइणी |
| 25 | C | अहकं |
| 26 | C | जेव्व |
| 27 | B | मुणम्मि |
| 28 | C | तदाहं |
| 29 | B C | समासादितं |
| 30 | B | °सच्च |
| 31 | A | drops one पुनः |
| 32 | C | भेदेनानेन |
| 33 | A | drops from द्विकभेदे to अहिम्मि । |
| | B | drops from द्विकभेदे to यथा and retains the verse |
| 34 | B | एत्त |
| 35 | B | दिवसअं |
| 36 | B | पुलोएहि |
| 37 | B | अंधअ |
| 38 | B | महणु |
| 39 | B | drops हि |
| 40 | B | drops अर्थो |

## उल्लासः ४

| | | |
|---|---|---|
| 1 | A. C | सन्येवाविवक्षितं |
| 2 | B | drops च |
| 3 | B | समुदायो |
| 4 | B | क्वचित्पुनरनुपद्यमानत्वादर्थ्यंतं |
| 5 | B | यत्र |
| 6 | B | मेव सव्वे सदा |
| 7 | C | लाववान् |
| 8 | B | °श्रेयस्विदूर्जस्वित्समा° |
| | C | °श्रेयऊर्जस्वित्समा° |
| 9 | B C | रसस्वरूपमाह |
| 10 | C | °भावाश्च कथ्यन्ते |
| 11 | C | °द्रसस्य निष्पत्ति° |
| 12 | C | कृतो |
| 13 | B | drops अपि |
| 14 | B C. | बाधे |
| 15 | B | drops च |
| 16 | B | समूढकर्पूर° |
| 17 | C | गता |
| 18 | B | °मद्य |
| 19 | B | तरलायत° |

| | | |
|---|---|---|
| 20 | B | वासनया |
| 21 | C | °दादिभिः स्थाय्यनुमाने° |
| 22 | B | कारकत्वादि° |
| 23 | B | ममैवै न |
| | C | ममैवैते न |
| 24 | B C | शत्रोरेवैते |
| 25 | B C | °स्वैवैत |
| 26 | B C | संबंधि |
| 27 | C | नियमानध्यवसायात्सा° |
| 28 | B | प्रमातृता |
| 29 | B | ब्रह्मास्वाद |
| 30 | B | पितत्संभव° |
| 31 | C | तस्यासंभवात् |
| 32 | C | लौकिकसिद्ध° |
| 33 | A | अवबाधशालि° |
| | C | शालिपरिमित° |
| 34 | C | वेद्यान्तरसंस्पर्श° |
| 35 | C | प्रत्येयोऽभिधी |
| 36 | B C | च प्रमाणं न |
| 37 | C | सविकल्पकम् |
| 38 | B | °भावरूपस्य |
| 39 | B | °तामवगमयति |
| 40 | B C | करुणभयानकयोः |
| 41 | C | °लिता एव |
| 42 | C | कान्तः instead of पाण्डुः |
| 43 | B | प्रचलितं |
| 44 | B | विभावानुभावानामौत्सु° |
| 45 | B | drops च |
| 46 | B | °णां च |
| | C | केवलानामत्र |
| 47 | B | करुणा |
| 48 | A | omits °लिङ्गनाधर° |
| | B | °स्वरालोकनालिंगनपान° instead no. 47 read no 48 |
| 49 | B | °स्थली |
| 50 | A | omits °हरणानि– A seems to write उदा-हरणानि in an abbreviated form like उदा° |
| 51 | B | सहसा |

| | | |
|---|---|---|
| 52 | C | प्रथमापराधसमये |
| 53 | B | °पोलपालिगलितैः |
| 54 | C | °ल्लोलोदकैर° |
| 55 | | no variant. |
| 56 | B | सर्वैः |
| 57 | B | प्रस्थितं |
| 58 | A | omits °हरणानि |
| 59 | B | प्रहित |
| 60 | B C | देवताः |
| 61 | A | विजहति |
| | C | विजहित |
| 62 | B | सायकाः संपतंतः |
| 63 | B C | किंचिद्भ्रूभङ्गलीला° |
| 64 | B | बद्धदृष्टिः |
| 65 | B C | दर्भै° |
| 66 | B | °क्लुतित्वा |
| 67 | A | पृथूच्छोपभूयांसि |
| | C | पृथूत्सेधभूयांसि |
| 68 | A | आन्तस्त्राज्यंत्रनेत्रात् |
| | C | आर्तः पर्यस्तनेत्रः |
| 69 | A | बताधिकार. |
| | B | बतावरातः |
| 70 | C | प्रबोधो° |
| 71 | A | निर्वेदः स्थायिभावः शान्तोऽपि नवमोऽस्ति रसः |
| | B | निर्वेदस्थायिभावः शान्तोऽपि नवमोऽस्ति रसः Read no 71 on निर्वेद |
| 72 | B | स्त्रेणे |
| 73 | C | यान्ति |
| 74 | A | in the margin कदारण्ये पुण्ये |
| | B C | °त्पुण्येरण्ये |
| 75 | B | drops one शिव |
| 76 | B | व्यक्तः |
| 77 | A | उदा० B उदाहरणे |
| 78 | B C | यदि मे न रोचते |
| 79 | C | अञ्जित व्य० |
| 80 | A. B | ततः instead of पुरः |
| 81 | B C | चाटुशतकै° |
| 82 | C | दरिद्रीकृतः |

